क्रमप्राप्तौ पार्थिवरश्मिमुख्यौ देवदेव्यावाह—

**तवाधारे मूले सह समयया लास्यपरया**
**नवात्मानं वन्दे नवरसमहाताण्डवनटम् ।**
**उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया**
**सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥ ४१ ॥**

**तवेति** । तव मूलाधारे; चतुर्दलपद्ममध्ये, लास्यपरया; लास्यरसिकया, शृङ्गाराधारं नृत्य लास्यम् । समयया सह; समयाख्यया शक्त्या सह । नवात्मानं नवरसमहाताण्डवनटम्, शृङ्गारादिनवरससमवहितनिरतिशयमहोत्साहताण्डवनटं वन्दे । उभाभ्यामेताभ्याम्; लास्येश्वर्यादिनटनवात्मकशिवाभ्याम्, उदयविधिमुद्दिश्य; महासंहारानन्तरं जगत उत्पत्तिमनुसधाय, दयया; नष्टस्य विश्वस्य कल्याणकारणभूतया, सनाथाभ्यां; स्वस्वामिकाभ्याम्, इद जगत्; जनकजननीमत् जज्ञे उत्पेदे । सिसृक्षोन्मीलितानुग्रहेण यथापूर्व जगदुत्पन्नं विलोक्य सतोषेण जगद्रक्षार्थै लास्यताण्डवसमुत्सुकाभ्यां देवदेवीभ्यां जगदिदं मातापितृमज्जातमित्यर्थः । यथा मातापितरौ पुत्रे जाते सतोषातिशयेन नृत्यतः, तथेति भावः । तथा च **महिम्नस्तुतौ**, "जगद्रक्षार्थै त्वं नटसि ननु वामैव विभुता" इति । (महानटेश्वरः लास्येश्वरी च मध्ये पूज्यौ, ध्येयौ वा; पूर्वोक्ताः षट्पञ्चाशत्पार्थिवमरीचयः परितः पूज्याः, ध्येया वा ।) अत्र पद्ये नवात्मकविद्याया उद्धारः सूचितः, न स्फुटीकृतो भगवता श्रीशंकराचार्येण, स गुरुमुखादवगन्तव्यः । इति चक्रषट्कं यथाज्ञानं गुरुमुखादवगतं किंचिन्निरूपितम् । इतोऽधिकं महाशयेभ्योऽधिगन्तव्यमिति ॥ ४१ ॥

इति श्रीगोविन्दाश्रमपूज्यपादशिष्यश्रीकैवल्याश्रमविरचितायामानन्दलहरी व्याख्याया सौभाग्यवर्धन्यां प्रथमस्तरङ्गः

———

APPENDIX 1

*Index of half Verses*

# आनन्दलहरीश्लोकार्धानामनुक्रमणिका

---

## APPENDIX 2

*Index of Authors*

## सौभाग्यवर्धन्यां स्मृता ग्रन्थकर्तारः



---

APPENDIX 3

*Index of works*

# सौभाग्यवर्धन्यां स्मृता ग्रन्थाः

## *Abbreviations used in the Appendix 4*

अभिनव० अभिनवगुप्तपादाः
अशेष० अशेषकुलवल्लरी
ऋक्० ऋक्संहिता
कादि० कादिमतम्
कु० त० कुब्जिकातन्त्रम्
कूर्म० कूर्मपुराणम्
क्रम० क्रमस्तुतिः
चतु० चतुःशती
चिद्० च० चिद्गगनचन्द्रिका
ज्ञान० ज्ञानार्णवः
तै० आ० आरण्यकम्
तै० ब्रा० तैत्तिरीयब्राह्मणम्
तै० सं० तैत्तिरीयसंहिता
त्रि० उ० त्रिपुरोपनिषत्
त्रिपुरा० त्रिपुरार्णवः
दत्त० दत्तात्रेय.
देवी० देवीपुराणम्
नवरत्न० नवरत्नमालिका
पद्य० पद्यवाहिनी
परा० परास्तोत्रम्
परि० परिमलः
पाणि० सू० पाणिनिसूत्रम्
प्रपञ्च० प्रपञ्चसारः
भग० भगवद्गीता
भस्म० भस्मजाबालोपनिषत्
महा० महाभारतम्
मनो० मनोरमा (तन्त्रराजव्याख्या)
महिम्न० महिम्नस्तुतिः
मानस० मानसोल्लासः
मा० हृ० मातृकाहृदयम्
मार्कण्ड० मार्कण्डेयपुराणम्
यो० हृ० योगिनीहृदयम्
याज्ञ० याज्ञवल्क्यः
योग० योगानुशासनम्
रघु० रघुवंशः
रह० सो० रहस्यसिद्धिसोपानम्
रुद्र० रुद्रयामलम्
लघु० लघुस्तवः
वा० रा० वासिष्ठरामायणम्
वि० प्र० विद्यार्थप्रकाशिका
श० ब्रा० शतपथब्राह्मणम्
शाभव० शाभवदीपिका
शा० ति० शारदातिलकम्
शिव० शिवदृष्टिः
सं० पं० संकेतपद्धतिः
सकल० सकलजननीस्तव.
सुभग० सुभगोदयः
स्कान्द० स्कान्दपुराणम्
स्व० सं० स्वच्छन्दसंग्रहः
स्व० त० स्वतन्त्रतन्त्रम्

APPENDIX 4

*Index of Citations*

# सौभाग्यवर्धन्यामुदाहृतप्रमाणवाक्यानामनुक्रमः

---

## शोधनम्

| | | | |
|---|---|---|---|
| पृ० | ७ | ८ | श्रीविद्यार्थ० |
| ,, | १९ | १२ | विन्यस्य |
| पृ० | ३२ | २२ | ० बिन्दुमुखी |
| ,, | २३ | १६ | च omit |

# सौभाग्यवर्धनीसहिताया सौन्दर्यलहर्या विषयानुक्रमणिका

ॐ

श्रीमच्छंकरभगवत्पादविरचिता

# सौन्दर्यलहरी

## कैवल्याश्रमविरचितया सौभाग्यवर्धन्याख्यया टीकया सहिता

### सौभाग्यवर्धनी

एवं शक्तितन्त्रशांभवतन्त्रयोः स्वरूपं निरूप्य 'तेषामप्युपरि तव पादाम्बुजयुगम्' इति पूर्वमुक्तं भगवत्याश्चरणाम्बुजस्योत्कर्षं प्रतिपादयितुं मुकुटादिचरणान्तमवयवस्तुतिं कर्तुमारभते—

**गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं**
**किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः ।**
**स नीडेयच्छायाच्छुरणशबलं चन्द्रशकलं**
**धनुः शौनासीरं किमिदमिति बध्नाति धिषणाम् ॥ १ ॥**

**गतैरिति** । हे हिमगिरिसुते! ते; तव, हैमं किरीटं माणिक्यत्वं गतैः गगनमणिभिः बालार्कैः सान्द्रघटितं निबिडस्यूतं संकीर्तयति यः, सः नीडे गोले यच्छायाच्छुरणेन यत्कान्तिव्याप्त्या शबलं विचित्रं चन्द्रशकलं शौनासीरं धनुः किमिदमिति धिषणां बुद्धिं बध्नाति, चित्ते धत्ते । उत्प्रेक्षते—माणिक्यादिनानारत्नखचितकिरीटकान्त्या संवलितं तत्रैव लग्नं चन्द्रशकलमालोक्य इन्द्रचापमतिं बध्नातीत्यर्थः । एतावता महादेव एवैतादृशीं मतिं चित्ते धत्ते । अन्यस्य तव मुखावलोकने का

शक्तिरिति भावः । अथवा हैमं किरीटमुक्तलक्षणं यः कीर्तयति, स तव साक्षात्कारं प्राप्य तवानुचरः सन् मुकुटमालोक्य शौनासीरं धनुः किमिदमिति बुद्धिं बध्नातीति । एतावता 'हैमकिरीटाय सहस्रादित्यतेजसे नमः' इति किरीटमन्त्र उदाहृतः । किरीटमन्त्रविशेषो गुरुमुखादवगन्तव्यः । एतत्कीर्तनेन च साक्षात्कारो भवति । तेनैतादृशी धिषणा भवतीति भावः । अथवा ध्यानयोगेन तव साक्षात्कारं प्राप्य किरीटमालोक्यैतादृशीं बुद्धिमनुसंधत्ते । किरीटमन्त्रमाहात्म्यमेतावता प्रकाशिता॥ १ ॥

अलकांस्तौति—

**धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं**
**घनं स्निग्धं श्लक्ष्णं चिकुरनिकुरुम्बं तव शिवे ।**
**यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो**
**वसन्त्यस्मिन्मन्ये बलमथनवाटीविटपिनाम् ॥ २ ॥**

**धुनोत्विति** । हे शिवे ! तव चिकुरनिकुरुम्बम् अलकसमूहम् तुलितदलितेन्दीवरवनं घनम् उपमितविकसितेन्दीवरवनम् । अनेनोपमितं तव चिकुरसदृशं तत्, न तु तत्सदृशमेतत् । यतः घनं स्निग्धं श्लक्ष्णं च । उपमेयचिकुरोत्कर्षहेत्वन्तरमाह— **यदीयमिति** । यदीयं सौरभ्यं सहजमुपलब्धुं प्राप्तुं बलमथनवाटीविटपिनाम् नन्दनवनतरूणां कल्पवृक्षाणां सुमनसः कुसुमानि तस्मिन् तव चिकुरनिकुरुम्बं वसन्तीति तेषां संसर्गेण तवालकानां नोत्कर्षः; किंतु तवालकसंपर्केण तेषामुत्कर्षः । सुरासुरसीमन्तिनीविहितपूजाच्छलेन तवालकाश्रयणे अयमेव हेतुरिति हेत्वलंकारः । एतादृशं नः ध्वान्तं धुनोतु दूरीकरोतु । स्वयं ध्वान्तायमानमपि ध्वान्तं नाशयतीति महदाश्चर्यम् ॥ २ ॥

सीमन्तं स्तौति—

**वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-**
**द्विषां बृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ।**

**तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-**
**परीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥ ३ ॥**

**वहन्तीति** । तव सीमन्तसरणिः सिन्दूरं वहन्ती । कीदृशं सिन्दूरम्? प्रबलकबलीभारः तस्य तिमिरोपमा त्विट् तासां बृन्दैः बन्दीकृतमिव नवीनार्ककिरणम्, तादृशम् । कीदृशी तव सीमन्तसरणिः? तव वदनसौन्दर्यलहरी; सौन्दर्यातिरेकपरंपरा, तस्याः परीवाहः उच्छ्रासः उत्तरोत्तरानुवर्तनम् । यत्र स्रोतःसरणौ सा स्रोतःसरणिः, सौन्दर्यरूपमहानद्या अनवरतानुवर्तमानधाराकारपरंपरोन्मेषवती प्रवाहसरणिरित्यर्थः । नः क्षेमं तनोतु । लब्धपरिपालनं क्षेमः । पूर्वजन्मपुण्यैः तव चरणाम्बुजभक्तिर्लब्धा तां प्रतिपालयता । अत्र उपमाद्वयेन भगवत्याः सीमन्तसौन्दर्यातिरेकः प्रतिपादितः । तेन जगदम्बिकाविषयभक्तिलक्षणभावः परिपुष्यते ॥ ३ ॥

सामान्यतो वदनं स्तौति—

**अरालैः स्वाभाव्यादलिकुलहसश्रीभिरलकैः**
**परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।**
**दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे**
**सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः ॥ ४ ॥**

**अरालैरिति** । अरालैः; कुटिलैः, स्वाभाव्यात्; सहजकुटिलैरित्यर्थः । अलिकुलहसश्रीभिः; अलिकुलं हसन्तीत्यलिकुलहसाः एतादृश्यः श्रियो येषां ते, तादृशैः अलकैः परीतं व्याप्तं ते वक्त्रं परिहसति पङ्केरुहरुचिम्; दरस्मेरे; ईषद्धासोन्मेषे, दशनरुचिकिंजल्करुचिरे; दन्तपङ्क्तिकान्तिकेसरमनोहरे यस्मिन् वदनकमले, सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः; मदनारिनेत्रमधुकराः, यत्स्वभावकुटिलैर्वेष्टितं दन्तपङ्क्तिरूपकेसरं मनोहरं सुगन्धि स्मरारिनेत्रमधुकरोन्मादकं तव वक्त्रं म्लायमानकेसरं बहु हास्य, तस्यां पङ्कोद्भवां मदनचापमौर्वीभूतमधुकरतोषकरीं पङ्केरुहरुचिं हसन्तीति किमाश्चर्यम् । किं बहुना? तव वदनपरीवारा अलकाः पङ्केरुहतरमलिकुलं हसन्ति । वक्त्रं पङ्केरुहं हसति । उभयैस्तुच्छीकृता पद्मरुचिः । अहो तव वदनमहिमा

परोत्कर्षासहकुटिलसंसर्गज इति ध्वनिरिति ध्वनिः । लोकेऽपि यः कुटिलचेष्टितः स ईषद्दन्तविकासेन मन्दस्मितेन स्वस्माद्धीनं हसति । परीतं यद्वक्त्रं तव हसति पङ्केरुहरुचिमिति क्वचित्पाठः । तदनुसारेणयमर्थो योजनीयः सर्वोऽपि ॥ ४ ॥

भालं स्तौति—

**ललाटं लावण्यद्युतिविमलमाभाति तव य-**
**द्वितीयं तन्मन्ये मुकुटघटितं चन्द्रशकलम् ।**
**विपर्यासन्यासादुभयकृतसंधानमयितः**
**सुधालेपस्फूर्तिः परिणमति राकाहिमकरः ॥ ५ ॥**

**ललाटमिति** । तव ललाटं लावण्येन कान्त्या च विमलं, तया आभाति, तव द्वितीयं मुकुटशशिखण्डस्य शकलमिति मन्ये । किरीटकोटिस्थस्य अर्धचन्द्रस्य परमर्धमित्यर्थः । तत्र हेतुमाह—**विपर्यासेति** । विपर्यासन्यासात् व्यत्यासतो न्यासात् हेतोः । विपर्यासे हेतुमाह—**उभयेति** । यतः उभयकृतसंधानमयितः; प्रापितः, व्यत्यासं विना समीकृत्य संधाने कृते, सुधालेपस्फूर्तिः; सुधासान्द्रविभ्रमः, राकाहिमकरः, पूर्णचन्द्रः परिणमति । चन्द्रबिम्बमध्ये कस्तूर्या रेखां विधाय द्विधा निर्भिद्य अर्धेन मुकुटशशिखण्डम्, अर्धेन च ललाटं विहितवान् कश्चिदनादिपुरुष. । अत एव भ्रूच्छलेन ललाटार्धचन्द्ररेखा दृश्यत इति भावः । उत्प्रेक्षोपमाहेत्वलंकाराणां संकरोऽत्र यथासंभवं ज्ञेयः ॥ ५ ॥

भ्रुवौ स्तौति—

**भ्रुवौ भुग्ने किंचिद्भुवनभयभङ्गव्यसनिनि**
**त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे ।**
**धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः**
**प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे ॥ ६ ॥**

**भ्रुवाविति** । हे भुवनभयभङ्गव्यसनिनि; जगद्भयभञ्जनशीले! तव भ्रुवौ किंचिद् भुग्ने ईषत्कुटिले, मधुकररुचिभ्या नेत्राभ्यां धृतगुणे; **भृङ्गायमाणनेत्रमौर्वीके,**

'धनुः पौष्पं मौर्वी मधुकरमयी' (श्लो० ६) इति प्रागुक्तं धनुर्मन्ये। पुष्पचापं जाने इत्युत्प्रेक्षालंकारः। सव्येतरकरगृहीतं वामकरगृहीतं धनुः रतिपते प्रकोष्ठे मुष्टौ च स्थगयति आच्छादयति। मुष्टौ धनुर्मध्यं प्रकोष्ठे ज्यामध्यं स्थगयति, निगूढान्तरं यथा भवति तथा प्रकोष्ठमुष्टिव्यवधानात् धनुर्मध्यं च न दृश्यत इत्यर्थः। भ्रूगतद्वै-विध्यदर्शने अयं हेतुः। वस्तुत एकमेव धनुः, न द्वे; निह्नवे पोषके हेत्वलंकारः॥६॥

अहः सूते सव्यमित्यादिभिरेकादशश्लोकैर्नेत्रे स्तौति—

**अहः सूते सव्यं तव नयनमर्कात्मकतया**
**त्रियामां वामं ते सृजति रजनीनायकममुम्।**
**तृतीया दृष्टिस्ते दरदलितहेमाम्बुजरुचिः**
**समाधत्ते संध्यां दिवसनिशयोरन्तरचरीम्** ॥ ७ ॥

**अहरिति**। हे देवि! तव सव्यं दक्षिणं नयनम् अहः सूते दिनं सृजति। अर्कात्मकतया तव नयनमेव सूर्यरूपेण दिवसमसृजदित्यर्थः। त्रियामां रात्रिं वामं ते रजनीनायकममुं चन्द्रम्; चन्द्रात्मकतयेत्यर्थः। ते तृतीया दृष्टिः; भालगता दृष्टिः, दरदलितहेमाम्बुजरुचिः; ईषद्विकचस्वर्णकमलकान्तिः, दिवसनिशयोरन्तरचरीं संध्यां समाधत्ते; वह्निरूपतया इति भगवत्याः नेत्रत्रयस्य सूर्येन्दुवह्निरूपतास्वभावोक्तिः। तेन शिवेन सहाभेदो ध्वन्यते ॥ ७ ॥

**विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः**
**कृपाधारा धारा किमपि मधुरा भोगवतिका।**
**अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया**
**ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते** ॥ ८ ॥

**विशालेति**। विशाला; विशालगुणयुक्ता, कल्याणी; सर्वदा कल्याणानु-मोदिनी, स्फुटरुचिः; सदा विकचस्वरा, अयोध्या; कुवलयैः; इन्दीवरैः योद्धुमशक्या। तव दृष्ट्या सह योद्धुमागतानि पराजितानि लज्जया रात्रावेव उन्मीलितमुखानि जायन्ते। न दिवेति भावः। अयमेवार्थः **स्तुतिकामधेनौ** दर्शितोऽस्माभिः प्रकारान्तरेण;

"नेत्रादवाप्य सुषमां मुखमम्बुजं ते दातुं शिवे पुनरशक्ति तदेकसारम् ।
आलम्ब्य पाथसि ससूत्रमृणालदण्डं नूनं तपः परमहंसयुतं तनोति ॥"

इति । कृपाधारा धारा, अनवरतदयापरंपरापरिपूर्णा, किमपि मधुरा ; अवाङ्मनसगोचरा मनोहरगुणा, भोगवतिका शिवविषयकपरमप्रेमार्द्रालोककौतुका । अवन्ती ; भक्तजनानिति । बहुनगरविस्तारविजया ; विशाला नगरी, कल्याणी कल्याणनाम पत्तनम्, अयोध्या, धारा, मधुरा, भोगवती, अवन्ती इति नगराणि विस्तारं विजयत इति बहुनगरविस्तारविजया सती तत्तन्नामव्यवहरणयोग्या विजयते, सर्वोत्कर्षेण वर्तते । विशालां जित्वा विशाला नाम व्यवहारयोग्या इति । कल्याणादि नगराणि जित्वा तेषां यानि यानि नामानि तैस्तैर्नामभिर्व्यवह्रियमाणा विजयते । ये ये गुणाः पूर्वोक्तास्ते ते विशालादिनगरेषु न सन्तीति भावः । किंच विशालादीनि नगराणि कुवलयैः जम्बूद्वीपादिसप्तभूचक्रैः योध्यानि आक्रान्तानि निगृहीतानि । तव दृष्टिस्तु कुवलयैरयोध्या अनाक्रान्ता । जगत्प्रकाशकसूर्येन्दुवह्निरूपे सतीति ध्वनिः । कुवलयैरिति शब्दच्छलेन इन्दीवराणि भूवलयाश्च गृह्यन्ते ॥ ८ ॥

**कवीनां संदर्भस्तवकमकरन्दैकरभरितं**
**कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।**
**अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला-**
**वसूयासंसर्गादलिकनयनं किंचिदरुणम् ॥ ९ ॥**

**कवीनामिति** । कवीनाम् ; वाल्मीकिव्यासप्रभृतीनां संदर्भस्तबकः गद्यपद्यादिरचनाविशेषः, तेषां मकरन्दाः शृङ्गारादिरसभावः, तैः एकभरितं पूर्णम् । कटाक्षव्याक्षेपभ्रमरकलभौ ; कटाक्षच्छलमधुकरशिशू, कर्णयुगलम् अमुञ्चन्तौ ; सदा कर्णोपान्ते सेवितौ दृष्ट्वा, असूयासंपर्कात् ; परोत्कर्षासहत्वात्, अलिकनयनम् ; भालनयनं किंचिदरुणम् । अत्र रूपकहेत्वलंकाराभ्यां स्वाभाविकोऽरुणिमापह्नूयत इत्यपह्नुतिरलंकारो व्यङ्ग्यः ॥९॥

**शिवे शृङ्गारार्द्रा तदितरमुखे कुत्सनपरा**
**सरोषा गङ्गायां गिरिशनयने विस्मयवती ।**

**हराहिभ्यो भीता सरसिरुहसौभाग्यजयिनी**
**सखीषु स्मेरा ते मयि जयति दृष्टिः सकरुणा ॥ १० ॥**

**शिवे इति ।** शिवे शृङ्गारार्द्रा, शृङ्गाररसाविर्भावसमुल्लसितविभ्रमनिर्भरा, तदितरमुखे; शिवादितरे ब्रह्मादयो मुखं प्रधाना यस्य तस्मिन्, समस्तेऽपि लोके विनाशित्वेन कुत्सनाजनितबीभत्सरसवती । तथाच ब्रह्मादीना विनाशित्वं, 'विरिञ्चिः पञ्चत्वम्' (श्लो० २६) इति पद्ये प्रकाशिता । अथवा शिवेतराणं मुखेषु त्वगादिधातुनिर्मितत्वेन विचिकित्साविबोधितबीभत्सरसः । मुखे इति जातावेकवचनम् । अथवा शिवेतरमुखे कदर्यताविभावितबीभत्सरसोन्मेषा । सरोषा गङ्गायाम्; सापत्न्यभावात् कलितक्रोधोदितरौद्ररसा । गिरिशनयने; एकवचनत्वाद् भालनयनमसाधारणमालोक्य विस्मयोल्लासिताद्भुतरसा । हराहिभ्यो भीता; कङ्कणादिभूषणीभूतसहस्रफणादिनागानालोक्य कथमयं कण्ठे विषं धत्ते इति गात्रेषु विषधरातिभयाविर्भावितभयानकरसा । सरसिरुहसौभाग्यजयिनी; पद्मगतसौभाग्यजयशीलतया प्रोत्साहोदञ्चितवीररसा । सखीषु स्मेरा; सखी कथय कीदृशोऽनुरागः तव शिवे, शिवस्य च त्वयि कीदृगिति सखीवचनाकर्णनोपनीतमन्दस्मितोदितहास्यरसा । मयि जयति दृष्टिः स करुणा; अयं मद्भक्तः सन् दुःखी भवतीति सानुग्रहोन्मीलितकरुणरसा इति शृङ्गाराद्यष्टरसजुष्टाः । शान्तस्तु नवमो रसो नेह प्रतिपादितः । शिवविषयकशृङ्गाररसप्राधान्यादनुपयुक्तः । तथाच **दशरूपकम्;**

"न यत्र दुःखं न सुखेन चिन्ता न द्वेषरागौ न च काचिदिच्छा ।
रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः ॥"

इति । विशेषतः शृङ्गारविरोधीति । ननु यत्र भिन्नरसा दृष्टिगता वर्ण्यन्ते; तत्र दृष्टिभेदेन वर्णनीयाः । यथा;

"एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् ।
अन्यद् दूरविकृष्टचापमदनक्रोधानलाद्दीपितं
शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥"

इति । अथवा;

"एकेनाक्ष्णा प्रविततरुषा वीक्षितं व्योमसंस्थं
भानोर्बिम्बं सजललुलितेनापरेण स्वकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥"

इति । तस्मादेकदृष्टिगता नानारसा वर्णनीया इति । सत्यम् । यत्र समप्राधान्यं रसानां तत्रैवाधिको गुणभेदः । यत्र पुनः समप्राधान्यं नास्ति, एकस्यैव मुख्यता; अन्येषां तत्पोषकत्वम्, तत्र नायं दोषः । प्रकृते शृङ्गारे रतिप्राधान्यप्रतिपादनात् तस्यैव मुख्यता । अत एवार्द्रेत्युक्तम् । कदापि तस्य शोको नास्तीति । अन्ये वीररसादयः तस्य पोषकाः । तस्मादत्र नायं दोषः । यथा;

"सक्रोधा दशकंधरे सकरुणा तस्यानुजे सस्मिता
प्रोत्फाले पवनौकसां सकुतुका युद्धे सनिन्दाम्बुधौ ।
साश्चर्या हनुमत्कृते सचकिता ब्रह्मान्वयोच्छेदने
सोद्वेगा दयितास्मृतौ मुकुलिता रामस्य दृष्टिः स्थिता ॥"

इति । सोद्वेगा अथ च मुकुलिता स्थिता इति विशेषणत्रयमहिम्ना दयितास्मरणानन्तरं न कश्चिद् दृष्टेर्व्यापारो जातः, स्तम्भाख्यसात्त्विकभावोऽभूत् । तेन विप्रलम्भशृङ्गारस्य प्राधान्यम्, अन्ये क्रोधादयस्तिरोहिताः । तथापि रौद्रबीभत्सौ शृङ्गारविरोधिनौ कथमत्रेति शङ्कनीयम् । एकविषयत्वे अयं दोषः, आश्रयभेदे न दोषः । प्रकृते शृङ्गारविषयोऽन्यः, जुगुप्सादिविषयोऽन्य इति न दोषः । तथा **दशरूपके**;

"एकोनपञ्चाशदमी हि भावा युक्त्या निबिद्धाः परिपोषयन्ती ।
आलस्यमौग्ध्यं मरणं जुगुप्सा तस्याश्रयाद्वै न विरुद्धमिष्टम् ॥"

(४. ४९) इति ॥ १० ॥

**गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती**
**पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले ।**

**इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके**
**तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥ ११ ॥**

**गत इति** । हे गोत्राधरपतिकुलोत्तंसकलिके! हे हिमवद्गिरीन्द्रकुलालंकरणभूतकर्णाभरणकल्पद्रुमप्रसूनकोरकशोभे! तव नेत्रे कर्णाभ्यर्णम्; कर्णान्तविश्रान्तं गते प्राप्ते गरुत इव पक्षाणीव पक्ष्माणि दधती, पुरां भेत्तुः; पुरवैरिशान्तरसोच्चाटनफलैः प्रशमरसविद्रावणमेव फलम्, तव सामर्थ्यमिति यावत्। फलमिति श्लिष्टं पदम्। शल्यमपि गृह्यते, तेन सारभाग इव द्राव्यते अनेनेति व्युत्पत्तिः। तत्र आकर्णाकृष्टस्मरशरविलासं कलयतः; मदनशरलीलां धत्तः। अत्रान्यलीलामन्यो धत्ते, साधर्म्यादिति निदर्शनालंकारेण मदनारेरपि प्रशमरसं विद्रावयत इति भगवत्या अपाङ्गमहिमा पुष्टः सन् शिवविषयकश्रृङ्गाररसोत्कर्षं व्यनक्ति ॥ ११ ॥

**विभक्तत्रैवर्ण्यं व्यतिकरितनीलाम्बुजतया**
**विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते।**
**पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्**
**रजः सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिव ॥ १२ ॥**

**विभक्तेति** । विभक्तत्रैवर्ण्यम्; त्रयाणां वर्णाना भावस्त्रैवर्ण्यम्; श्वेतरक्तकृष्णानामित्यर्थः। तस्य व्यतिकरः संपर्कः स संजातो यत्र, तादृशनीलाम्बुजतया श्वेतरक्तनीलसंपृक्तनीलोत्पलभावेनेत्यर्थः। नीलाम्बुजरुचेति पाठान्तरम्। हे ईशानदयिते! त्वन्नेत्रत्रयमिदं विभाति। उपरतान्; प्रलयं गतान् द्रुहिणहरिरुद्रान् पुनः स्रष्टुं रजःसत्त्वं तम इति गुणानां त्रयमिव; दक्षिणनेत्रं रजोगुणप्रधानम्, वामं नेत्रं सत्त्वप्रधानम्, भालनेत्रं तमःप्रधानम्, तैः ब्रह्मविष्णुरुद्रान् उपरतान् स्रष्टुं श्वेतरक्तश्याममिति विभक्तत्रिवर्णभावसंयुक्तनीलाम्बुजभावैः श्वेतरक्तश्यामात्मकगुणत्रयं बिभृष इति पिण्डितोऽर्थः। क्वचित् सर्गे विष्णुः नाभिकमले एकं ब्रह्माणं सृष्टवान्; भगवती नेत्रोत्पलैः ब्रह्मविष्णुमहेश्वरान् सृजति। लीलयेति पाठे नेत्रमहिमा लोकोत्तर इति ध्वनिः। विभक्तत्रैवर्ण्यव्यतिकरितनीलाञ्जनतयेति क्वचित् पाठः। तत्रायं न ध्वनिः। एवं पाठत्रये यदुचितं तत् सद्भिर्ग्राह्यम् ॥ १२ ॥

**पवित्रीकर्तुं नः पशुपतिपराधीनहृदये**
**दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।**
**नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं**
**त्रयाणां तीर्थानामुपनयसि संभेदमनघे ॥ १३ ॥**

**पवित्रीति** । हे पशुपतिपराधीनहृदयये ! महादेवपरतन्त्रे ! दयामित्रैः ; दयारसनिबद्धसौहार्दैः, अरुणधवलश्यामरुचिभिः ; विभक्तत्रैवर्णैः क्रमेणेत्यर्थः । शोणो नदः गङ्गा तपनतनया इति त्रयाणां तीर्थानां संभेदं सङ्गमं नः अस्मान् पवित्रीकर्तुम् उपनयसि ; समीपगतं करोषि । लोके गङ्गायमुनासरस्वतीनां संभेदो दृष्टः । न तु शोणगङ्गायमुनानाम् । नः पवित्रीकर्तुमेतादृशं वीर्यसंभेदमुपनयसि । हे अनघे ! अहो तव भक्तेषु दयापरतन्त्रता असंभावी, संभावयसीति भावः । अत एव नद्याः स्वाभाविकनैर्मल्यगुणोल्लसितात्वं यद्यपि प्रत्येकं नेत्रत्रयेऽपि त्रैगुण्यमस्ति । तथापि त्रैगुण्यतारतम्यमिह प्रतिपाद्यम् । रजोगुणाधिक्यं दक्षिणनेत्रे ; सत्त्वगुणाधिक्यं वामनेत्रे, तमोगुणाधिक्यं भालनेत्रे, सत्त्वगुणाधिक्यं वा ॥ १३ ॥

**तवापर्णे कर्णेजपनयनपैशुन्यचकिता**
**निलीयन्ते तोये नियतमनिमेषाः शफरिकाः ।**
**इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं**
**जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ १४ ॥**

**तवापर्णे** इति । हे अपर्णे ! तव कर्णेजपनयनपैशुन्यचकिताः ; कर्णेजपाः दुर्जनाः, सर्वदा कर्णान्तचुम्बिनयनयोः पैशुन्यभीताः स्वसादृश्यमस्मासु विलोक्य भगवत्याः कर्णे सासूये किंवा दौर्जन्यं कथयत इति भीताः शफरिकाः अनिमेषाः सत्यः नियतं ध्रुवं तोये निलीयन्ते । इयं च श्रीः ; कुवलयश्रीः, बद्धच्छदकवाटं कुवलयं ; निमीलितदलकपाटं कुवलयं प्रत्यूषे जहाति । निशासु विघटय्य उद्घाट्य प्रविशति । कुवलयश्रीरपि कर्णेजपनयनपैशुन्यभीता दिवा कुत्रचिन्निलीय स्थित्वा, रात्रौ बद्धच्छदकपाटमुद्घाट्य चोरवत्प्रविशति । अत्र नयनयोः कर्णान्तविश्रान्तत्वं प्रकृतम् । शफरिकाणां तोये वासश्च साध्यत इत्यपह्नुतिः १४ ॥

**निमेषोन्मेषाभ्यां प्रलयमुदयं यातिजगती**
**तवेत्याहुः सन्तो धरणिधरराजन्यतनये ।**
**त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः**
**परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ १५ ॥**

**निमेषेति** । हे धरणिधरराजन्यतनये! तव निमिषोन्मेषाभ्यां प्रलयमुदयं याति जगती; पृथ्वी, जगतीत्युपलक्षणम् । सकलं जगत्; जगतीशब्दो जगद्वाचक इत्यभियुक्तवचनमिति । सन्तः; परमार्थदशायां चिद्विलासं विश्वं पश्यन्तः, त्वदुन्मेषात् जातं; जगदिदमशेषं प्रलयतः परित्रातुं परिहृतनिमेषाः तव दृश उन्मीलनात् जातं जगत् तदानीं च निमीलने जाते उत्पन्नमेव पश्यन्त इति हेतोरनिमिषनयनत्वमिति भावः । निरतिशयानन्दमय्या एव ब्रह्माविनाभूतचिच्छक्तेः देवताशरीरोपाधिमवलम्बमानायाः स्वाभाविकं तदन्यथा प्रस्तूयत इत्यपह्नुतिरेव ॥ १५ ॥

**दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा**
**दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।**
**अनेनायं धन्यो भवति न च ते हानिरियता**
**वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ १६ ॥**

**दृशेति** । हे शिवे ! द्राघीयस्या; दीर्घतरया, दृशा दरदलितनीलोत्पलरुचा; ईषद्विकसितनीलोत्पलरुचा, दवीयांसं; दूरस्थं, दीनं; संसारक्लेशपर्याकुलमनन्यगतिकं, स्नपय, आप्लावय । कृपया; परिप्लुतदृष्टिपरंपरया मा पश्य । अनेनायं मल्लक्षणो जनो धन्यो भवति । न च ते हानिः इयता; एतावता तावन्मात्रेण न काचित् क्षतिः । अपिशब्दोऽत्र दर्शनविशेषद्योतकः । यथा स्तम्भादिकं पश्यसि, तथा न । किंतु कृपया दर्शने कृपामात्रवैशिष्ट्ये सति धन्योऽयं जनः तव लीलामात्रेण भवति; न कश्चिदायासः । यतः वने वा हर्म्ये वा सौधे वा हिमकरः समकरनिपातः । यथा चन्द्रः अहमोषधीशः तेन वने अधिकान् करान् किरामि, हर्म्ये स्वल्पानिति

पक्षपातवान् न भवति। तथा त्वमपि दूरस्थे समीपस्थे अदर्शने पक्षपातवती न भवसि। विशेषतोऽहं दीनः, मद्विषये पक्षपातोऽप्युचित इति भावः। अत्र प्रतिपादितपदार्थस्य दृढीकरणायार्थान्तरोपन्यासादर्थान्तरन्यासोऽलंकारः॥ १६॥

**अरालं ते पालीयुगलमगराजन्यतनये**
**न केषामाधत्ते कुसुमशरकोदण्डकुतुकम्।**
**विरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलस-**
**न्नपाङ्गव्यासङ्गो दिशति शरसंधानधिषणाम्॥ १७॥**

**अरालमिति।** हे अगराजन्यतनये! अरालं; कुटिलं, ते पालीयुगलं; भ्रूयुगलं, न केषामाधत्ते कुसुमशरकोदण्डकुतुकम्; अपि सर्वेषामधत्ते। तिरश्चीनः, तिर्यगाकृष्टः, श्रवणपथमुल्लङ्घ्य। विलसन्नपाङ्गव्यासङ्गः; कटाक्षविसर्गः, शरसंधानधिषणां दिशति; व्यक्तीकरोतीत्यर्थः। आकर्णकृष्टशरसंधानेन मदनधनुः कस्य कौतुकं न करोति। न केषामाधत्त इति व्यतिरेकेण पर्यवसिता निदर्शना। अन्यः कुतुकं यो धत्ते अरालस्य साधर्म्यात् अपाङ्गव्यासङ्गः शरसंधानधिषणां दिशति। तिरश्चीनः श्रवणपथमुल्लङ्घ्य विलसन्निति श्लिष्टविशेषणमहिम्ना समासोक्तिराक्षिप्तोपमा वा। अत्र स्मरारेराधत्ते-कुसुमशरकोदण्डकुतुकमिति युक्तः पाठः। सर्वेषामित्यनौचित्यात्॥ १७॥

क्रमप्राप्तं श्रवणाभरणं स्तौति—

**स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं**
**चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम्।**
**यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं**
**महावीरो मारः प्रथमपतये सज्जितवते॥ १८॥**

**स्फुरदिति।** स्फुरन्नानारत्नदीधितिजालेन प्रकाशमानदृष्टगण्डाभोगयोः कपोल-परिणाहयोः प्रतिबिम्बितताटङ्कयुगलम्। अथवा स्फुरतोः निरुपमनैर्मल्येन देदीप्य-मानयोः गण्डाभोगयोः कपोलपरिणाहयोः प्रतिफलितताटङ्कयुगलं चतुश्चक्रं तव मुखमिदं मान्मथरथमारुह्य आश्रित्य अवनिरथं पृथ्वीरथम् अर्केन्दुचरणं चन्द्रसूर्य-

चक्रमारुह्य अस्वं पदं दैत्यसंघं जितवते प्रथमपतये द्रुह्यति, आरुह्येत्युभयत्र संबन्धः । महावीरो भवन्मुखलक्षणरथाश्रयणप्राप्तामोघविक्रमो मारः प्रमथपतेरवनिरथः सूर्यचन्द्र-रूपद्विचक्रः भवन्मुखरथः चतुश्चक्र·, अथ चन्द्रसूर्यवह्निरूपनयनत्रयाधिष्ठितः, तमाश्रित्य प्रमथपतिः जेष्यतीति किमाश्चर्यमिति ध्वनिः । अत्र यमाश्रित्येति युक्तः पाठः । मदनस्य जगदम्बिकामुखारोहणमापाततोऽनुचितमिति यदुचितं तत्सद्भिर्ग्राह्यम् । प्रकृतमुखस्वरूपमपह्नुत्य मान्मथरथत्वारोपादपह्नुतिः ॥ १८ ॥

ताटङ्कयुगलं प्रस्तूय श्रवणयुगलप्रख्यापनद्वारा कुण्डलगणं स्तौति—

**सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः**
**पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरतम् ।**
**चमत्कारश्लाघाचलितशिरसः कुण्डलगणो**
**झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ १९ ॥**

**सरस्वत्या** इति । सरस्वत्याः सूक्तीः ; गद्यपद्यादिगणरूपाः अमृतपरंपरा-निधानसमाः, श्रवणचुलकाभ्यामविरतमम् , अनवरतं पिबन्त्याः तव चमत्कारश्लाघा-चलितशिरसः सूक्तिश्रवणसमुदितचमत्कारेण या साधुवादोत्सुकता, तया कम्पितमौलेः कुण्डलगणः प्रतिवचनमाचष्ट इव ते प्रत्युक्तिः साधुसाध्विति कथनीया । अथवा चमत्कारस्य या श्लाघा साधूक्तिः, तया कम्पितशिरसः तव कुण्डलगणः तारैः उच्चैः झणत्कारैः प्रतिवचनम् अनुमोदनरूपम् आचष्ट इव । न केवलं त्वं श्लाघसे । किंतु अचेतनः गुण्डलगणः अनुमोदत इति ध्वनिः । श्रवणयोश्चुलकत्वख्यापनम्, तच्चा-मृतास्वादनरूपाकर्णने कारणम्, तच्च श्लाघायां कारणम्, सा च प्रतिवचनदाने कारणम्, प्रतिवचनं चोपमया लभ्यत इति कारणमाला ॥ १९ ॥

नासांस्तौति—

**असौ नासावंशस्तुहिनगिरिवंशध्वजपटि**
**त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।**

**वहत्यन्तर्मुक्ताः शिशिरकरनिःश्वासघटिताः**
**समृद्ध्या यस्तासां बहिरपि च मुक्तामणिधरः ॥ २० ॥**

**असाविति** । हे हिमगिरिवंशध्वजपटि! हिमवंशशब्दः श्लिष्टः हिमवंशदण्डे ध्वजपटी ध्वजपताकेत्यर्थः । असौ नासावंशः त्वदीयः अस्माकं नेदीयः फलं निकटगतं फलमुचितं फलतु । तव चरणभक्तिभावसदृशं दातुमुद्युक्तं भवतु । वहन्नन्तर्मुक्ताः; सुषिरान्तर्मौक्तिकानि दधानः, शिशिरतरनिःश्वासघटिताः; शीतलतरनिःश्वासप्रेरिताः, समृद्ध्या यस्तासा बहुत्वेन बहिरपि च मुक्तामणिधरः अन्तःसमृद्धानां मुक्तानां मध्यतः आश्रितमेकं मुक्ताफलं बहिर्निर्गतं निःश्वासनिरुद्धनासाग्रावलम्बि तिष्ठतीति भावः । अत्र स्वभावसिद्धानासाभरणमुक्ताफलमपह्नुत्यान्यथा सिद्धत्वकल्पनादपह्नुतिः । कार्येण बहिःस्थितमुक्ताफलेन कारणभूतानां मुक्ताफलानामन्तःसमृद्धिरनुमीयत इत्युपमालंकारः ॥ २० ॥

दन्तच्छदं स्तौति—

**प्रकृत्या रक्तायास्तव सुदति दन्तच्छदरुचेः**
**प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता ।**
**क्व बिम्बं दृग्बिम्बप्रतिफलनला ादरुणितं**
**तुलामध्यारोढुं कथमिव न लज्जेत कलया ॥ २१ ॥**

**प्रकृत्येति** । हे सुदति! प्रकृत्या, रक्तायाः; स्वभावारुणायाः तव दन्तच्छदरुचेः अधरकान्तेः सादृश्यं प्रवक्ष्ये; विद्रुमलता तर्हि फलं जनयतु उत्पादयतु । बिम्बं क्व? बिम्बसादृश्यमुच्यतामिति चेत् न; क्व बिम्बं दृग्बिम्बप्रतिफलनलाभादरुणितम्; दृग्बिम्बः सूर्यबिम्बः तस्य प्रतिफलनं तस्य लाभादरुणितम् । तव नयनीभूतबिम्बसूर्यकान्तिप्रतिबिम्बसंजातपाकेनारुणितमित्यर्थः । कलयापि तुलां समताम् अध्यारोढुं कथमिव न लज्जते । त्वद्बिम्बप्रतिफलनलाभादिति पाठान्तरम् । तव कान्तिप्रसारप्रतिबिम्बवशादित्यर्थः । भगवत्याः कान्तेर्जगत्प्रसारित्वात् बिम्बच्छदेऽपि प्रतिबिम्बः कान्तेरित्यर्थः । अत्र विद्रुमलता चेत्फलं जनयत्विति अन्वयमुखेन

कालत्रयेऽपि विद्रुमलता फलं न जनयति; नापि दन्तच्छदस्याहं सादृश्यं वक्ष्य इति व्यतिरेकः। बिम्बं च तुलामध्यारोढुं कथमिव न लज्जेत। अपि तु लज्जेतैवेति व्यतिरेकमुखेनानन्वये विश्रान्तिः। तस्मात् दन्तच्छदस्योपमा नास्ति। तव दन्तच्छदस्य तव दन्तच्छद एव सदृशः। यथा;

"गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव ॥"

इति। तस्मात् उपमानान्तरसंबन्धाभावात् अनन्वयालंकारो ध्वनितः ॥ २१ ॥

स्मितं स्तौति—

**स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां**
**चकोराणामासीदतिरसतया चञ्चुजडिमा।**
**अतस्ते शीतांशोरमृतलहरीमम्लरुचयः**
**पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिया ॥२२॥**

**स्मितेति**। तव वदनचन्द्रस्य स्मितज्योत्स्नाजालम्; स्मितमिव ज्योत्स्ना तत्समूहं, पिबतां; चकोराणाम्, अतिरसतया; अत्यन्तमधुरास्वादनतया, चञ्चुजडिमा; चञ्चुगतारोचकत्वमासीत्। अतः ते शीतांशोः अमृतलहरीं; किरणामृतपरंपरां पिबन्ति। स्वच्छन्दं; निरर्गलं यावत्पर्यन्तं चञ्चुजडिम्नो विश्रान्तिः तावत्, काञ्जिकधिया; अम्लतः अत्यन्तमधुरपायसादिभोजनेनारोचके जाते सति अम्लभक्षणं विधाय पुनः पायसादिमधुरं भुञ्जते। तथा, अत्र चन्द्रकिरणस्योपमानस्य काञ्जिकत्वदोषारोपेण तुच्छत्वप्रतिपादनात् उपमेयस्य वदनस्योत्कर्षप्रतिपादनादतिशयोक्तिः। तव वदनचन्द्रस्य स्मितज्योत्स्नाजालमिति रूपकद्वयेन तव वदनचन्द्रः सर्वदा पूर्णः, अकलङ्कः ह्रासहीनः। तादृशस्य स्मितज्योत्स्नाजालं तत्पिबतां चकोराणां चञ्चुजडिमा जातः। तव स्मितचन्द्रिकासुधात्वं किरणह्रासवृद्धिकदर्थितस्य राकायामेव पूर्णस्य किरणामृतलहरी काञ्जिकायत इति किमद्भुतमिति ध्वनिः ॥ २२ ॥

रसनां स्तौति—

**अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजडा**
**जपापुष्पच्छाया तव जननि जिह्वा जयति सा ।**
**यदग्रासीनायाः स्फटिकदृषदच्छच्छविरुचः**
**सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा ॥ २३ ॥**

**अविश्रान्तमिति** । हे जननि! अविश्रान्तम्; अनवरतं, पत्युः; महादेवस्य, गुणगणकथाम्रेडनजडा, गुणगणनानुवादपौनःपुन्येन जडा, हर्षातिरेकपरवशात् जपापुष्पच्छाया सा तव जिह्वा जयति । यदग्रे आसीनायाः स्फटिकदृषदच्छच्छविवन्निर्मलरुचः सरस्वत्या मूर्तिः माणिक्यवपुषा परिणमति । जिह्वाकान्तिप्रतिफलनेन स्फटिकनिर्मलायाः सरस्वत्या मूर्तिः माणिक्यवदारक्ता जायत इत्यर्थमौपम्यम्; तेन तुल्यार्थोपमा ॥ २३ ॥

वदनं स्तौति—

**रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभि-**
**र्निवृत्तैश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः ।**
**विरिञ्चीन्द्रोपेन्द्रैः शशिशिशिरकर्पूरधवला**
**विलिप्यन्ते मातस्तव वदनताम्बूलशकलाः ॥ २४ ॥**

**रण** इति । हे मातः! रणे दैत्यान् जित्वा अपहृतशिरस्त्रैः; अवतारितशिरस्त्राणैः, कवचिभिः; श्लथीकृतकवचैः, निवृत्तैः चण्डांशत्रिपुरहरनिर्माल्यविमुखैः; चण्डस्यैवांशः भागः तद्रूपं यत् शिवनिर्माल्यम्, अतो हेतोः तद्विमुखैः विरिञ्चीन्द्रोपेन्द्रैः शशिशिशिरकर्पूरधवलाः तव वदनताम्बूलशकलाः विलिप्यन्ते; रणश्रान्तैः विरिञ्च्यादिभिः श्रमपरिहाराय तव वदनकर्पूरमिश्रताम्बूलशकला विक्षिप्यन्त इति स्वभावोक्तिः । कर्पूरशकला इति कचित्पाठः । चण्डांशुत्रिपुरहरनिर्माल्यविमुखैरिति पाठः कचित् । महादेवशिरःस्थितचन्द्रकौमुदीं शिवनिर्माल्यमिति त्यक्त्वा ताम्बूलशकला एव विलिप्यन्त इति श्लोकार्थः । ताम्बूलगुणवर्णनेन भगवत्या वदनसौभाग्यं स्तुतमेतावता ॥ २४ ॥

वदनं स्तुत्वा वाणीं स्तौति—

**विपञ्चया गायन्ती विविधमपदानं पशुपते-**
**स्त्वयारब्धे वक्तुं स्खलितवचसा साधुवदने ।**
**तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां**
**निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥ २५ ॥**

**विपञ्च्येति** । विपञ्च्या ; त्रितन्त्रीवीणया, विविधमपदानम् ; पूर्ववृत्तं त्रिपुरदहनादि बहुविधं कर्म पशुपतेर्गायन्ती । पुररिपोरिति युक्तः पाठः । त्वयारब्धे वक्तुं स्खलितवचसा ईषद्व्यक्तवचनेन त्वया साधुवादनेन वक्तुमारब्धे सति । ललितवचसेति क्वचित्पाठः । साधुवचने तदीयैः माधुर्यैः ; साधुवादमाधुर्यैः, अपलपिततन्त्रीकलरवाम् ; तिरस्कृततन्त्रीमधुरतया, निजां वीणां वाणी ; सरस्वती, निचुलयति ; चोलं परिधापयति । एतत्साधुवादमाधुर्येण मम विपञ्चीकलरवध्वनिरकिंचित्कर इति लज्जया चोलेन निभृतं वीणामाच्छादितवतीत्यर्थः । अत्र स्वभावोक्तिरलंकारः ॥ २५ ॥

चिबुकं स्तौति—

**कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया**
**गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।**
**करग्राह्यं शंभोर्मुखमुकुरवृन्तं गिरिसुते**
**कथंकारं ब्रूमस्तव चिबुकमौपम्यरहितम् ॥ २६ ॥**

**कराग्रेणेति** । तुहिनगिरिणा , हिमाचलेन अतिप्रीत्या उपलालनादिषु वात्सल्येन स्पृष्टं पुत्रीस्नेहेन कराग्रेण स्पृष्टम्, गिरीशेन उदस्तम् उन्नमितं मुहुः वारंवारम् अधरपानाकुलतया ; अथ च शंभोः करग्राह्यं मुखमुकुरवृन्तं मुखदर्पणदण्डम्, हे गिरिसुते ! तव चिबुकमौपम्यरहितं कथंकारं ब्रूमः, केन प्रकारेण ब्रूमः ? त्वं प्रकारं त्वमेव जानासि । स प्रकारो नास्मद्गोचरः । तव चिबुकस्य तवैव चिबुकं सदृशमित्युपमालंकार एवालंकारः । अत्र मुहुरधरपानाकुलतयेति पित्रोः सुरतवर्णनवदनुचितम्, भगवतः शंकरावतारस्य शंकराचार्यस्य वचन इति वा पाठो युक्तः ॥ २६ ॥

ग्रीवां स्तौति—

**भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती**
**तव ग्रीवा धत्ते मुखकमलनालश्रियमियम्।**
**स्वतः श्वेता कालागरुबहुलजम्बालमलिना**
**मृणालीलालित्यं वहति यदहो हारलतिका॥ २७॥**

**भुजेति।** भुजाश्लेषात् नित्यं पुरदमयितुः कण्टकवती; रोमाञ्चितवती, तव ग्रीवा मुखकमलनालश्रियमियं यत्कारणात् धत्ते। स्वतः स्श्वेता; स्वभावतः श्वेता, कालागरुबहुलजम्बालमलिना; कृष्णागरुपङ्कमलिना मृणालीलालित्यं वहति, यत् यतः हारलतिका अहो ग्रीवा मुखकमलनालश्रियं धत्ते, कण्टकितसाम्यादिति निदर्शनात् हारलतिका मृणालीलालित्यं धत्ते; श्वेतगुणसाम्यात् कृष्णागरुजम्बालकृतमालिन्यसाम्याच्चेति निदर्शनमेव। अहो इति विस्मयः। अत्र रूपकनिदर्शनापह्नुतिहेतुविस्मयतासंकरः॥ २७॥

कण्ठगतरेखात्रयं स्तौति—

**गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे**
**विवाहव्यानद्धत्रिगुणगुणसंख्याप्रतिभुवः।**
**विराजन्ते नानाविधमधुररागाकरभुवां**
**त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते॥ २८॥**

**गले इति।** हे गतिगमकगीतैकनिपुणे! तव गले तिस्रो रेखाः, विवाहव्यानद्धत्रिगुणगुणसंख्याप्रतिभुवः; विवाहसमये ईश्वरेण बद्धत्रिगुणीकृतमाङ्गल्यसूत्रस्य साक्षिणो विराजन्ते। नानाविधमधुररागाकरभुवाम्; नानाप्रकारषड्जमध्यमादिसप्तस्वरानुबन्धमधुरमाधुर्यवसन्तमालवगौडगुर्जरकर्णाटकानां रागादिगीतानाम् उत्पत्तिस्थानाना भूमीनां, त्रयाणां ग्रामाणां; षड्जग्राममध्यमग्रामपञ्चमग्रामाणां, स्थितिनियमसीमान इव त्वमत्र तिष्ठ। त्वमत्र तिष्ठेति स्थितिनैयत्यकृतः सीमानः स्फुरन्तीत्यर्थः। अत्रोपमा स्पष्टा, रूपकं च॥ २८॥

भुजांस्तौति—

**मृणालीमृद्वीनां तव भुजलतानां चतसृणां**
**चतुर्भिः सौन्दर्यं सरसिजभवः स्तौति वदनैः ।**
**नखेभ्यः संत्रस्यन् प्रथमदमनादन्धकरिपो-**
**श्चतुर्णां वक्त्राणां सममभयहस्तार्पणधिया ॥ २९ ॥**

**मृणालीति** । मृणालकोमलानां तव दोर्लतानां चतसृणां सौन्दर्यं ब्रह्मा चतुर्भिः मुखैः स्तौति । अन्धकरिपोः नखेभ्यः संत्रस्यन् प्रथमदमनात् हेतोः एकं मुखं पुररिपुणा मम निकृत्तम्, अवशिष्टानि चत्वार्यपि छेत्स्यतीति भयेन समं युगपत् अभयदानार्पणधिया चतुर्भिः हस्तकमलैः अभयं मह्यं देहीति वरप्रार्थनबुद्ध्ये त्यर्थः । एतावता तव अभयदानेच्छोः अन्धकरिपोरपि क्रोधो ममातिक्रमे न शक्तः । तस्मात्तवैव प्रसादो मुख्य इति भावः । चतुर्भिर्वदनैश्चतृसृणां भुजलतानां सौन्दर्यं स्तौतीति परिसंख्यालंकारः ॥ २९ ॥

करांस्तौति—

**नखानामुद्योतैर्नवनलिनरागं विहसतां**
**कराणां ते कान्तिं कथय कथयामः कथमुमे ।**
**कयाचिद्वा साम्यं भजतु विधया हन्त कमलं**
**यदि क्रीडल्लक्ष्मीचरणतललाक्षारुणदलम् ॥ ३० ॥**

**नखानामिति** । नखानां कान्तिभिः नवनलिनरागं विहसतां कराणां ते कान्तिम्, हे उमे ; हे परमेश्वरि ! कथं कथयामः ? केन सह साम्यं कथयामः ? त्वमेव कथय । प्रसिद्धकमलमस्ति, तेन सह कथयेति चेत्, न कयाचिद्वा साम्यं भजतु विधया हन्त कमलम्, कयाचिद्विधया कमलसादृश्यं भजतु । हन्तेति वितर्के । यदि क्रीडल्लक्ष्मीचरणतललाक्षारुणदलं स्यात्, कमलसाम्यं तव कराणां दूरे तिष्ठतु । तव करसाम्यं कमलं तदा लप्स्यते, कयाचिद्विधया क्रीडन्त्याः कमलालयायाः चरण-तलालक्तकरसारुणं यदा स्यात् । तव कराणां कमलसाम्यकथने का संभावनेति

भावः । अत्र कमलस्य कदाचिद् दैवयोगेन कमलालयायाः चरणालक्तकारुण्यसंपर्कः संभाव्य इति संभावनालंकारः ॥ ३० ॥

कुचयुग्मं स्तौति—

**समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं**
**तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।**
**यदालोक्याशङ्काकुलितहृदयो हासजनकः**
**स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥ ३१ ॥**

**सममिति** । हे देवि! युगपत् स्कन्दद्विपवदनपीतम् तव स्तनयुगम् सततं प्रस्नुतमुखम्; अनवरतं पुत्रयोर्वात्सल्येन उत्सिक्तं पयःस्रवन्मुखम्, नः खेदं हरतु । यथा पुत्रवात्सल्यं तथा मयि वात्सल्येन खेदं हरतु । यदालोक्य आशङ्काकुलितहृदयो हासजनकः, मम कुम्भौ कथमत्रागताविति भ्रान्त्या स्वकुम्भौ हस्तेन झटिति परामृशति । अत्र तुल्यदर्शनेन स्तनद्वये कुम्भभ्रम इति भ्रान्तिमानलंकारः ॥ ३१ ॥

**अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ**
**न संदेहस्पन्दो नगपतिपताके मनसि नः ।**
**पिबन्तौ तौ यस्मादविदितवधूसङ्गमरसौ**
**कुमारावद्यापि द्विरदवदनक्रौञ्चदमनौ ॥ ३२ ॥**

**अमू त** इति । अमू ते वक्षोजौ अमृतरसमाणिक्यकुतुपौ; माणिक्यघटीविशेषौ न संदेहास्पन्दः । अत्र पिबन्तौ तौ यस्माद्धेतोः अज्ञातवधूसङ्गमरसौ अद्यापि कुमारौ कौमारावस्थास्थितौ द्विरदवदनक्रोञ्चदमनौ; अत्र स्तनयोरमृतरसपूर्णमाणिक्यकुतुपत्वसंदेहनिवृत्तेः प्रस्नुतत्वनिश्चयतया संदेहालंकारः । कौमाररूपेण कार्येण अमृतरसपूर्णस्तनतया पानमनुमीयत इत्युनुमानं चालंकारः ॥ ३२ ॥

**वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः**
**समारब्धां मुक्तामणिभिरमलां हारलतिकाम् ।**

**कुचाभोगो बिम्बाधररुचिभिरन्तःशबलितां**
**प्रतापव्यामिश्रां पुरविजयिनः कीर्तिमिव ते ॥ ३३ ॥**

**वहतीति** । हे अम्ब ! स्तम्बेरमदनुजकुम्भप्रकृतिभिः; गजकुम्भप्रकृतिभिः, समारब्धा; रचितां, मुक्तामणिभिः अमला हारलतिकां कुचाभोगः बिम्बाधररुचिभिः अन्तःशबलिताम्; अन्त.प्रतिबिम्बितां, प्रतापव्यामिश्रां, प्रतापसंवलितां, पुरविजयिनः कीर्तिमिव वहति । महादेवस्य कीर्तिप्रतापः तव हृदयंगतः सर्वदेति भावः । विमलतरे हारे बिम्बाधररुचिप्रतिबिम्बतया अरुणगुणारोपेण प्रतापसंमिश्रकीर्त्युपमानस्य प्रस्तुतत्वादध्यारोपोपमा ॥ ३३ ॥

**तव स्तन्यं मन्ये तुहिनगिरिकन्ये हृदयतः**
**पयःपारावारः परिवहति सारस्वत इव ।**
**दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव य-**
**त्कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ३४ ॥**

**तवेति** । हे तुहिनगिरिकन्ये ! तव स्तन्यं; स्तनपरिपूर्णं दुग्धं, पयःपारावारः सारस्वत.; सरस्वतीविलासरूपः, हृदयतः परिवहति इति मन्ये । सरस्वतीरूपः समुद्रः सदा परिवहतीत्यर्थः । दयावत्या दत्तं द्रविडशिशुः, मल्लक्षण, आस्वाद्य यत् यस्मात् कवीनां प्रौढानां मध्ये कमनीय· कवयिता अजनि ॥

अत्रेयं चिरन्तनाख्यायिका—भगवत· शंकराचार्यस्य पिता अत्यन्तं परमेश्वरीभक्तः ग्रामाद्बहिः परमेश्वर्या आयतनं गत्वा दुग्धेन परमेश्वरीं संस्नाप्य पूजां विधाय नमस्कृत्यावशिष्टं किंचिद् दुग्धं सङ्गे गताय सूनवे शंकराचार्याय प्रयच्छति । बालकस्य मनसि प्रत्यहं परमेश्वरी स्वयं पिबति, पीतशेषं मह्यं पिता ददातीति मतिर्जागर्ति । कदाचिद् ग्रामान्तरं गच्छन् बालकस्य मातरं प्रत्युक्त्वा गतः, 'प्रत्यहं मदागमनं यावत् तावत्त्वया दुग्धेन स्नापनीया भगवती पूजनीया सम्यक्' इति । सा तथा कुर्वाणा कदाचित् स्त्रीधर्मिणी जाता । गृहे कोऽपि नास्ति । तदा पुत्रं प्रेषितवती, 'दुग्धेन भगवतीं संस्नाप्य पूजां विधायागम्यताम्' इति । बालो गत्वा पूजां विधाय दुग्धं पुरतो निधाय 'परमेश्वरि पिब' इति गदितवान् ।

यदा विलम्बो जातः, भगवती च न पिबति; तदा रोदितुमारब्धवान्। ततः परमेश्वरी दयया आविर्भूय दुग्धं पीतवती। पुनः पात्रं रिक्तं विलोक्य, सर्वं त्वया पीतं मदर्थे न स्थापितं किमपीति रोदितुं प्रवृत्तः। ततो विहस्य बालकमङ्के समारोप्य स्तन्यं दत्तवती। जगदम्बिकास्तन्यपानेन सर्वा विद्यास्तदानीमेव पुरःस्फूर्तिका जाताः। कवयन्नेव गृहं गतः। एतस्मिन्नन्तरे पिता समागतः। बालस्याकृतिं वाग्जृम्भितं च विलोक्य साश्चर्योऽभूत्। स्वप्ने आगत्य परमेश्वरी उक्तवती, 'अयं बालः शंकरांशः, अनेन लोकोद्धारो भविष्यति, त्वया चिन्ता न कार्या, मम बालकोऽयम्' इति ॥ ३४ ॥

रोमावलिं स्तौति—

**हरक्रोधज्वालावलिभिरवलीढेन वपुषा**
**गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः।**
**समुत्तस्थौ तस्मादचलतनये धूमलतिका**
**जनस्तां जानीते तव जननि रोमावलिरिति ॥ ३५ ॥**

**हरे**ति। हे अचलतनये! हरक्रोधज्वालावलिभिः अवलीढेन; कबलितेन, वपुषा गभीरे ते नाभीसरसि कृतसङ्गः मनसिजः अभूदिति शेषः। 'ननु मग्नो मनसिजः' इति पाठः क्वचित्। तस्मात् नाभीसरसः समुत्तस्थौ धूमलतिका, तां धूमलतिकां जनो लोकः जानीते, हे जननि! तव रोमावलिरिति। इयं रोमावली न भवति, धूमलतिकेति प्रकृतरोमावलिं निषिध्य धूमलतिकायाः प्रतिपादितत्वादपह्नुतिः। हरक्रोधज्वालाकुलस्यापि त्वमेव शरणं, त्वदन्यः परित्राणे न समर्थ इति भावः ॥ ३५ ॥

**यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे**
**कृशे मध्ये किंचिज्जननि तव यद्भाति सुधियाम्।**
**विमर्दादन्योन्यं कुचकलशयोरन्तरगतं**
**तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥ ३६ ॥**

**यदेतदि**ति। हे शिवे! यदेतत् कालिन्दीतनुतरतरङ्गाकृति कृशे मध्ये किंचित् तव भाति, सुधियां भक्तजनानां तनुर्विभाति, अन्योन्यविमर्दात् तनूभूतम्; अतिसूक्ष्मीभूतं, कुचकलशयोरन्तरगतं मध्यगतं कुहरिणीं गह्वरवर्ती नाभिं प्रविशदिव। यमुनासूक्ष्मतरतरङ्गोपमानं रोमावलीलक्षणं यदेतत् किंचिद् भाति। इदमित्थमिव वक्तुमशक्यं तत् सुधियां मनसि कुचकलशयोर्मध्ये गतं व्योम तयोः परस्परविमर्दात् सूक्ष्मं सत् नाभिकुहरिणीं प्रविशदिव भाति। एतावता व्यक्ताव्यक्तलक्षणो रोमावल्या ईषत्समुद्भेदो निरूपितः। अत्र 'जननि तव तद्देवि गिरिशे' इति पाठो युक्तः। जगन्मातुः रोमावली सर्वेषामेव भातीति वक्तुमनुचितम्। अथवा सुधिय इत्येकवचनं वा कल्पनीयम्। सुधियो महादेवस्येत्यर्थात् पर्यवस्यति। अन्यस्य लोकजनस्य रोमावलीदर्शनस्यायोग्यत्वात्। अत्रोपमा स्पष्टा ॥ ३६ ॥

नाभिं स्तौति—

**स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता-**
**निजावालं कुण्डं कुसुमशरतेजोहुतभुजः।**
**रतेर्लीलागारं किमपि तव नाभिं गिरिसुते**
**बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥ ३७ ॥**

**स्थिर** इति। हे गिरिसुते! गङ्गावर्तः स्थिरः; निश्चलः, स्तनमुकुलरोमावलिलतानिजावालम्; स्तनकोरकलतायाः स्तनावेव मुकुलौ कोरकौ तयोः रोमावलिरिति लता, तस्या आलवाले, आलवालो गर्तविशेषः, कुण्डं कुसुमशरतेजोहुतभुजः; आलवालभूतं मन्मथस्य कान्तिरिति। रतेः लीलागारं; रतेः विलासगृहम्, किमपि; अनिर्वाच्यं, परमेश्वरस्याम्बकानां सिद्धेर्बिलम् अनर्घ्यगुणसौन्दर्यं बिलविवरद्वारं सिद्धेः इति गिरिशनयनानां विजयते सर्वोत्कर्षेण वर्तते। नान्यस्य तव नाभिं विलोक्य एतादृशश्चमत्कारो गिरिशनयनानामिव भाति। त्रिलोचनव्यतिरिक्तनयनागोचरत्वात्। अत्रैकस्या एव नाभेः गङ्गावर्तादिभिरभेदारोपान्मालारूपकोऽलंकारः ॥ ३७ ॥

मध्यं स्तौति—

**निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो**
**नमन्मूर्तेर्नाभौ वलिषु शनकैस्त्रुट्यत इव ।**
**चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा**
**समावस्थस्थेम्नो भवतु कुशलं शैलतनये ॥ ३८ ॥**

**निसर्गेति** । स्वभावक्षीणस्य स्तनतटभरेण ग्लानिजुषः नमन्मूर्तेः नाभौ नाभिप्रदेशे वलिषु शनकैः मन्दं भङ्गुरतया त्रुट्यन्निव प्रतिभातीत्यर्थः । चिरं ते मध्यस्य; एतादृशस्य, त्रुटिततटिनीतीरतरुणा; त्रुटितश्चासौ तटिनीतीरतरुश्चेति कर्मधारयः । समावस्थस्थेम्नः; समा अवस्था यस्य (सः) समावस्थः, एतादृशः स्थेमा स्थैर्यं यस्य । हे शैलतनये ! चिरं कुशलं भवतु । स्वभावत एव क्षीणः स्तनभरेण ग्लानः नाभी नमन्मूर्तिः वलिषु निम्नोन्नतभावेन त्रुट्यन्निव एतादृशस्य तव मध्यस्य त्रुटता नदीतीरतरुणा सह समाना यस्य स्थैर्यस्य कुशलं भवतु । भक्तिभावे आशंसा । एतादृशोऽपि मध्यः भक्तानुग्रहाय शरीरभृतः तव न त्रुटति । अहो आश्चर्यमिति ध्वनितः । अथवा एतादृशोऽपि मध्यः महादेवभाग्यवशात् तिष्ठतीति भक्तिरसोन्मेषित-हासोक्तिः ॥ ३८ ॥

वलित्रयं वर्णयति—

**कुचौ सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ**
**कषन्तौ दोर्मूले कनककलशाभौ कलयता ।**
**तव त्रातुं भङ्गादुदरमवलग्नं तनुभुवा**
**त्रिधा नद्धं देवि त्रिवलिलवलीवल्लिभिरिव ॥ ३९ ॥**

**कुचाविति** । हे देवि ! कुचौ सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ; महादेवविषय-कानुरागसमुदितस्वेदलक्षणसात्त्विकभावाकलिततटसंसक्तकञ्चुकभेदोन्मुखौ, दोर्मूले; कषन्तौ घृष्यन्तौ । अथ च कनककलशाभौ कलयता तनुभुवा; कामेन, अवलग्नं

मध्यं भङ्गात् त्रातुं त्रिवलिलवलीवल्लिभिः; त्रिवल्ल्य एव लवल्य:, ताभिः; 'कुरपारेवरी' इति कान्यकुब्जभाषोक्तलताभिः, उदरं त्रिधा नद्धमिव। अनेनोपकारेण मयि सानुग्रहो महादेवो भविष्यतीति ध्वनिः। अत्र स्वभावोक्त्युपमालंकारौ स्पष्टौ ॥ ३९ ॥

नितम्बं वर्णयति—

**गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजा-**
**न्नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे।**
**अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं**
**नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ॥ ४० ॥**

**गुरुत्वमिति**। हे पार्वति! क्षितिधरपतिः; हिमवान्, गुरुत्वं विस्तारं च निजात् नितम्बात् आच्छिद्य विस्तीर्य गुरुः हरणरूपेण निदधे। दुहित्रे देयो दायो हरणम्, दायिजमिति लौकिकभाषा। अतः ते नितम्बप्राग्भारः गुरुः विस्तीर्णः अशेषा वसुमतीं स्थगयति आच्छादयति। विस्तारेण गुरुत्वेन च वसुमतीशोभां तिरस्करोतीत्यर्थः। लघुत्वं च नयति च। तव नितम्बबिम्बशोभया सकलभूबिम्बोऽतिलघुर्जात इत्यर्थः। भरणरूपेणेति क्वचित्पाठः। भरणम् आयुधादिदानम्। अयमर्थः—सकलदेवताशरीरसमुत्थिततेजोराशिरूपशरीरोपाधिं महिषासुरवधायावलम्बमानायां त्वयि भरणरूपेण, "शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकधृक्" इत्यादिदेवतानामायुधादिभरणसमये हिमवान् वाहनं सिंहं, रत्नानि विविधानि च दत्वा स्वनितम्बात् गुरुत्वं विस्तारं च निष्कृष्य भरणरूपेण निदधे निक्षेपीकृतवान्। देवाः यथा स्वस्वायुधादिभरणं कृतवन्तः, तथा हिमवानपि नितम्बभरगुरुत्वं विस्तारभरणं कृतवानित्यर्थः। अतस्ते नितम्बप्राग्भारः आकृतिविशेषः अशेषां वसुमतीं स्थगयति; लोकत्रयं व्याप्य स्थिताया आच्छाद्यावनमतीत्यर्थः। तदुक्तं **मार्कण्डेये**—

"स ददर्श ततो देवीं व्याप्य लोकत्रयं त्विषा।
पादाक्रान्त्या नतभुवं किरीटोल्लिखिताम्बराम् ॥
क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेन ताम्।
दिशो भुजसहस्रेण समन्ताद्व्याप्य संस्थिताम् ॥"

इति । लघुत्वं नयति च; अतिलघुर्जाता पादाक्रान्तावनता भूरिति भावः ॥ ४० ॥

ऊरुजानुनी युगपदेव वर्णयति—

**करीन्द्राणां शुण्डां कनककदलीकाण्डपटली-**
**मुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति ।**
**सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते**
**विजिग्ये जानुभ्यां विबुधकरिकुम्भद्वयमपि ॥ ४१ ॥**

**करीन्द्राणामिति** । हे गिरिसुते ! करीन्द्राणां शुण्डां कनककदलीकाण्डपटलीं च उभाभ्याम् ऊरूभ्यामुभयमपि ; करीन्द्रशुण्डां कनककदलीकाण्डसमूहं च निर्जित्य, पत्युः ; महादेवस्य, प्रणतिकठिनाभ्याम् ; प्रतिदिनं शिवपादार्चानन्तरं कृतप्रणामकठिनाभ्यां भवति विबुधकरिकुम्भद्वयमपि विजिग्ये । शुण्डामित्येकवचनम् । एकहेलया जिताः सर्वा इति द्योतनार्थः । एकशुण्डेन सर्वाः शुण्डाः जिता इति भावः । जात्येकवचनं वा ॥ ४१ ॥

जङ्घे वर्णयति—

**पुरा जेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते**
**निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत ।**
**यदग्रे लक्ष्यन्ते दशशरफलाः पादयुगली-**
**नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ॥ ४२ ॥**

**पुरा जेतुमिति** । हे गिरिसुते ! रुद्रं पुरा जेतुं जङ्घे निषङ्गौ द्विगुणशरगर्भौ ; अन्तर्गूढदशशरगर्भौ बाढं विषमविशिखः कामः अकृत । यत् ; यतः, अग्रे ; निषङ्गीभूतजङ्घयोरग्रे, दशशरफलाः ; अग्रभागाः शल्यानि लक्ष्यन्ते । नखाग्रच्छद्मानः ; नखाग्रच्छलाः, सुरमुकुटशाणौघनिशिताः ; चरणानतसुरमुकुटान्येव शाणाः तैर्निशिताः संमार्जिताः पूर्वं पञ्चशराः, अधुना तव जङ्घे निषङ्गौ दशशरगर्भौ कृत्वा रुद्रं जेष्यतीति दशशरः सन्निति किमाश्चर्यमिति भावः । अत्र एते नखा न भवन्ति, किंतु द्विगुणीकृतशरशल्यानीति प्रकृतनिषेधादपह्नुतिः ॥ ४२ ॥

श्रीदेवीचरणकमलयोः सर्ववेदान्तप्रतिपाद्यत्वमुखेन स्वशिरोनिधापनमाशास्ते—

**श्रुतीनां मूर्धानो दधति तव यौ शेखरतया**
**मयाप्येतौ मातः शिरसि दयया धेहि चरणौ ।**
**ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी**
**ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ४३ ॥**

श्रुतीनामिति । हे मातः! श्रुतीनां मूर्धानः उपनिषदः, यौ तव चरणौ शेखरतया दधति मूर्धन्यतया बिभ्रति । तावेतौ ममापि शिरसि धेहि । ययोः पाद्यं पाथः; पाद्यजलं, पशुपतिजटाजूटतटिनी; गङ्गा, ययोः लाक्षालक्ष्मीः अरुणहरिचूडामणिरुचिः; विष्णोः शिरोभूषणमणिकान्तिः अलक्तकरागः मानापमानोदनशिवशिरोधार्यगङ्गाजलं ययोः पाद्यजलायते । प्रणमतश्च हरेर्मुकुटे विजृम्भमाणदिव्यरत्नरुचिरलक्तकरागायते । तौ मम मौलौ निधाय कृतार्थीकुरु, मामित्यर्थः । गङ्गाजलचूडामणिरुच्योः पाद्यत्वलाक्षालक्ष्मीत्वारोपादारोपकविशेषः ॥ ४३ ॥

तादृशचरणकमलयोर्नमस्कारं करोति—

**नमोवाकं ब्रूमो नयनरमणीयाय पदयो-**
**स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।**
**असूयत्यत्यन्तं यदभिहननाय स्पृहयते**
**पशूनामीशानः प्रमदवनकङ्केलितरवे ॥ ४४ ॥**

**नमोवाकमिति** । हे मातः! नयनरमणीयाय तव अस्मै पदद्वन्द्वाय नमोवाकं ब्रूमः; नमस्कारसूक्तं ब्रूमः, वाचनिकं नमस्कुर्मः, स्तुम इत्यर्थः । स्फुटरुचिरसालक्तवते; प्रकाशमानकान्तिद्रवयावकवते, यदभिहननाय स्पृहयते प्रदवनकङ्केलितरवे; क्रीडावनरक्ताशोकाय, "अशोकश्चरणापाताज्जायते पुष्पवत्तरः" इति दोहदं वाञ्छते । पशूनामीशानः; महादेवः, अत्यन्तम् असूयति जगदम्बिकाचरणाघातं वाञ्छनीयं त्वं कथं वाञ्छसि पुष्पसमृद्धिस्तव ममानुग्रहादेव भविष्यतीति, एतावता परमेश्वरीचरणस्पर्शं

यत्र शिवोऽपि वाञ्छति, तत्रास्मदादीना जन्मान्तरसुकृतं विना जगदम्बिकायाश्चरण-सेवा न लभ्यत भावः ॥ ४४ ॥

पुनरपि द्वाभ्यां पादावेव वर्णयति—

**मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं**
**ललाटे भर्तारं चरणकमले ताडयति ते ।**
**चिरादन्तःशल्यं दहनकृतमुन्मीलितवता**
**तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा ॥ ४५ ॥**

**मृषेति** । हे परमेश्वरि! मृषा कृत्वा गोत्रस्खलनम्; मिथ्यासपत्नीनामग्रहणं विधाय, अथ वैलक्ष्यनमितम्, साध्वसभावेन नमितं, भर्तारं, शिवं रोषात् ते चरण-युगली ललाटे ताडयति सति, चिरात् अन्तःशल्यं दहनकृतम् उन्मीलितवता; भालनयनविहितदाहदुःखम् उन्मीलितवता उद्गीर्णवता ईशानरिपुणा तुलाकोटिक्वाणैः किलिकिलितं किलिकिलध्वनिना उपहसितं, 'पूर्वमहं त्वया दग्धः, इदानीमहं मातुः शरणं गतः, किं कर्तुं समर्थोऽसि? इति' । एते तुलाकोटिक्वाणा न भवन्ति, किंतु ईशानरिपुणा संतोषेण किलिकिलितध्वनिः कृत इत्यपह्नुतिः । अत्र ईशानः रिपुर्य-स्येति बहुव्रीहिः । नतु तत्पुरुषः, तत्पुरुषे सति कामस्येव वध्यस्योत्कर्षः स्यात् । यत्र मृषा गोत्रस्खलनं विधायापि शिवः जगदम्बिकाचरणस्पर्शं वाञ्छितवान्, अतः अस्मदादीनां परदेवतायाश्चरणसेवा पुण्यैर्विना न लभ्यत इति ध्वनिः ॥ ४५ ॥

**हिमानीहन्तव्यं हिमगिरितटाक्रान्तिचतुरौ**
**निशायां निद्राणं निशि च परभागे च विशदौ ।**
**परं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनां**
**सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम् ॥ ४६ ॥**

**हिमानीति** । हे जननि! तव पादौ सरोजं जयतः इह किं चित्रम्? यतः सरोजं हिमानीहन्तव्यं हिमगिरितटाकान्तिचतुरौ तव पादौ निशाया निद्राणं मुकुलितं निशि च परभागे च विशदौ रात्रिं दिनं विकस्वरौ, परं लक्ष्मीपात्रम्; लक्ष्म्या आधारभूतम्, समयिनाम्, भयच्चरणभक्तिभावप्रतिपादकशास्त्रनिष्ठानाम्, श्रियम् अतिसृजन्तौ, एतादृशौ तव पादौ सरोजं जयतः । अत्र को विस्मयः? अत्रोपमानं तुच्छीकृत्योपमेयस्यातिशयप्रतिपादनादतिशयोक्तिः ॥ ४६ ॥

पादाग्रं स्तौति—

**पदं ते कान्तीनां प्रपदमपदं देवि विपदां**
**कथं नीतं सद्भिः कठिनकमठीखर्परतुलाम् ।**
**कथं वा हस्ताभ्यामुपयमनकाले पुरभिदा**
**यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ४७ ॥**

**पदमिति** । हे देवि! ते प्रपदं पादाग्रम्, कान्तीनां पदं स्थानम्, विपदाम्; आपदाम् अनधिकरणम् कालत्रयेऽपि विपत्संभवविधुरम् । सद्भिः; पुरातनकविभिः, कठिनकमठीखर्परतुलाम्, कठोरकच्छपीपृष्ठखर्परसाम्यं कथं नीतम्? "गूढगुल्फ(पद)-द्वन्द्वप्रपदाजितकच्छपाम्" इत्यादौ, पुरभिदा हस्ताभ्याम् उपयमनकाले; विवाह-संप्रयुक्ताश्मारोपणकाले, दयमानेन मनसा, दयाशबलचेतसा, यत् आदाय दृषदि कथं विन्यस्तम्? परशुधन्वाकर्षणकिणहस्ताभ्यामादाय दृषदि कथं न्यस्तम्? अहो चिरंतन-कवीनां पुरभिदश्चाविवेक इति भावः[1] ॥ ४७ ॥

श्रीदेव्याश्चरणकमलयोर्भक्तजनाभीष्टप्रदानप्रवणत्वमाह—

**नखैर्नाकस्त्रीणां करकमलसंकोचशशिभि-**
**स्तरूणां दिव्यानां हसत इव ते चण्डि चरणौ ।**

[1] 'नाय श्लोक· श्रीशंकराचार्यणा, सांप्रदायिकमलयालयदेशीयानां पुस्ततेषु यतो नास्ति, नापि दाक्षिणात्यानां पुस्केषु, नापि पाठतोऽप्यायाति' इति केषुचित्कोशेषु दृश्यते ।

**फलानि स्वःस्थेभ्यः किसलयकराग्रेण ददतां**
**दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ४८ ॥**

**नखैरिति** । हे चण्डि! भक्तजनविपद्विभञ्जनप्रचण्डे ! नाकस्त्रीणाम्; देवाङ्गनानाम्, करकमलसंकोचशशिभिः; प्रणामसमये देवाङ्गनानां करकमल-मुकुलीकरणे शशिरूपैः नखैः, तव चरणौ दिव्यानां तरूणां हसत इव; कर्मणि षष्ठी । कल्पतरून् हसत इत्यर्थः । हासे हेतुमाह—**फलानीति** । फलागि इष्टानि स्वस्थेभ्यः सुखेन तिष्ठद्भ्यः । अथवा स्वर्गस्थेभ्यः, किसलयकराग्रेण ददतां; किसलया-कारकराग्रेण प्रयच्छतां, दरिद्रेभ्यः श्रियमनिशम् अह्नाय; सर्वदा अत्यर्थं, भद्राम् अनश्वरां वितरन्तौ कल्पतरवः मरणानन्तरं स्वर्गस्थेभ्यः सुखेन तिष्ठद्भ्यो देवेभ्यश्च फलानि किसलयकराग्रेण ददतः तव चरणौ, हे चण्डिके! चमत्कारकारिकान्तिकल्लोल-दिगन्तैः नखशशिभिः कल्पतरून् हसत इत्यर्थः । अत्र स्वःस्थेभ्य इति श्लिष्टपद-सामर्थ्यात् कल्पतरुहासोऽभिद्योतित इति समासोक्तिः । स्वभावतस्तरवः कराग्रेण स्वर्गवासिभ्यः कतिपयदिनैर्नश्वरां श्रियं कदाचिद्ददानात्, तव चरणौ चैहिकामुष्मिक-सुखसंतानसमुल्लसितां श्रियं वितरन्तौ हसत इति किमाश्चर्यमिति भावः ॥ ४८ ॥

एतावता चरणयोर्महिमानं प्रस्तुत्य तच्चरणनिर्णेजनपानं प्रार्थयते—

**कदा काले मातः कथय कलितालक्तकरसं**
**पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।**
**प्रकृत्या मूकानामपि च कविताकारणतया**
**कदाधत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ४९ ॥**

**कदेति** । हे मातः । कदा काले; कस्मिन् समये, कलितालक्तकरसं तव निर्णेजनजलं; चरणक्षालनजलं विद्यार्थी पिबेयम्, यत् प्रकृत्या स्वभावेन, मूकाना-मपि कविताकारणतया; कवितोन्मेषहेतुतया, वाणीमुखकमलताम्बूलरसताम् आधत्ते, सरस्वतीवदनकमलताम्बूलरागशोभां करोति । ताम्बूलाकलितसरस्वतीवदनवाग्विलास-सदृशसूक्तिलहरीसमुन्मेषहेतुः यत् भवति, तत् कदा पिबेयं कथयेत्यर्थः । यद्यपि पूर्वं

स्तन्यदानेन अहं कृतार्थो जातः। किंतु तदा मम संदर्शनानन्तरं पुनः संदर्शनं प्राप्य भक्तिभावेन प्रणम्य चरणोदकपानं कदाभावि कथयेति भूतभाव्यलंकारो व्यङ्ग्यः। भक्तिभावेन प्रणम्य चरणोदकपानं नाभूत्। अधुना पानाभावात् तव स्वरूपं न जानीमः ॥ ४९ ॥

एवं पादोदकं प्रस्तुत्य तद्गतिवर्णनमाह—

**पदन्यासक्रीडापरिचयमिवारब्धुमनस-**
**श्चरन्तस्ते खेलं भवनकलहंसा न जहति।**
**स्वविक्षेपे शिक्षां सुभगमणिमञ्जीररणित-**
**च्छलादाचक्षाणं चरणकमलं चारुचरिते ॥ ५० ॥**

**पदन्यासेति**। हे चारुचरिते! पदन्यासक्रीडापरिचयमारब्धुमनसः; चरणविक्षेपलीलाचातुर्यमारब्धुं कामयमानाः, खेलं चरन्तः; क्रीडामाचरन्तः, स्वविक्षेपे; स्वस्य विक्रमे, सुभगमणिमञ्जीररणितच्छलात्, शोभमानमणिनूपुरनिक्वाणच्छलेन, शिक्षामाचक्षाणमिव ते तव चरणकमलं भवनकलहंसा न जहति, न त्यजन्ति। अद्यापि प्रतिदिनमध्याप्यमानाः तव चरणविन्यासं लीलां न लभन्त इति भावः ॥ ५० ॥

इदानीं श्रीदेव्या नित्यश‍ृङ्गारित्वं प्रस्तौति—

**गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः**
**शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः।**
**त्वदीयानां भासां प्रतिफलनलाभारुणतया**
**शरीरी श‍ृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥ ५१ ॥**

**गता** इति। हे मातः! द्रुहिणहरिरुद्रेश्वरभृतः; पृथिव्यप्तेजोवाताधिपब्रह्मविष्णुरुद्रेश्वरैः मञ्चचरणतां गतैः धृतः, शिवः; सदाशिवः व्योमाधिपतिः, स्वच्छच्छायाघटितकपटप्रच्छदपटः; शुभ्रकान्त्या घटितं कपटं छद्म यस्य प्रच्छदपटस्य आस्तरणपटस्य तादृशः, तव मञ्चत्वं गतः सदाशिवः स्वच्छकान्तिरूपः

आस्तरणपटः, त्वदीयानां भासां प्रतिफलनलाभारुणतया; त्वत्कान्तिप्रतिबिम्बलाभारुणभावेन, शृङ्गारो रसः शरीरीव दृशा कुतुकं दोग्धि, परमशिवनेत्राणां कुतुकं तनोति। तथाच **रुद्रयामले—**

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
एते पञ्च महाप्रेता भूताधिपतयो मताः॥
चत्वारो मञ्चचरणाः पञ्चमः प्रच्छदः पटः।
साक्षी प्रकाशरूपेण शिवेनाभिन्नविग्रहा॥
तत्रासने समासीना निर्भरानन्दरूपिणी।"

इति। यद्यपि शृङ्गाररसः श्याम इति संगीतशास्त्रादौ प्रतिपादितः, तथापि शृङ्गार रसस्यानुरागप्रधानरजोगुणमयत्वादरुणगुण इह प्रतिपादितः॥ ५१॥

निखिलनिगमागमप्रसिद्धं प्रबन्धप्रतिपाद्यं वस्तु विशेषतो वर्णयति—

**अराला केशेषु प्रकृतिसरला मन्दहसिते**
**शिरीषाभा चित्ते दृषदिव कठोरा कुचतटे।**
**भृशं तन्वी मध्ये पृथुरपि वरारोहविषये**
**जगत्त्रातुं शंभोर्जयति करुणा काचिदरुणा॥ ५२॥**

**अरालेति।** केशेषु अराला; कुटिला, प्रकृतिसरला; स्वभावसरला मन्दहसिते, शिरीषाभा गात्रे, दृषदिव शिलेव कुचतटे कठोरा, भृशम् अत्यर्थं तन्वी मध्ये, पृथुरपि विपुला वरारोहविषये, जगत् त्रातुं शंभोः जयति करुणा काचिदरुणा। वस्तुतः साक्षाच्छिवाविनाभूतचिच्छक्तेः शरीरपरिग्रहो नास्ति। जगत् त्रातुम् एतादृशशरीरोपाध्यवलम्बनमिति भावः। कुटिलत्वसरलत्वयोः, कठोरत्वमृदुत्वयोः, तनुत्वपृथुत्वयोरेकाधिकरणे प्रतिपादनाद्विरोधाभासः। अवयवगतधर्माणामवयविन्यारोपादवयवावयविनोरभेदो रूपकविशेषः, अध्यारोपोपमापरपर्यायः। यथा;

"त्याज्यः कुटिलसंसर्गो निस्पृहेणापि यत्नतः।
स्वभावनिर्मला गङ्गा तरङ्गैः कुटिलायते॥"

इति । जगत्त्राणकरुणया एतादृशशरीरोपाधिमवलम्बमाना अतर्क्यैश्वर्यधुर्या शंभोः अरुणगुणविशिष्टा काचिच्छिच्छक्तिर्जयतीति वाक्यार्थः ॥ ५२ ॥

श्रीभगवत्या वदनप्रतिबिम्बमहिमानं प्रस्तौति—

**समानीतः पद्भ्यां मणिमुकुरतामम्बरमणि-**
**र्भयादास्यान्तःस्तिमितकिरणश्रेणिमसृणः ।**
**दधाति त्वद्वक्त्रप्रतिफलनमश्रान्तविकचं**
**निरातङ्कं चन्द्रान्निजहृदयपङ्केरुहमिव ॥ ५३ ॥**

**समानीत** इति । मणिमुकुरता पद्भ्यां; मणिमयादर्शरूपां लक्ष्मीं शोभां, समानीतः; प्राप्तः अम्बरमणिः आस्यभयात् अन्तःस्तिमितकिरणश्रेणिमसृणः; स्वकिरणसंपर्कात् जगदम्बिकावदनस्य ग्लानिर्भविष्यतीति भयात् अन्तः संकुचितकिरणश्रेणिभिः मसृणः चिक्कणः सन्, त्वद्वक्त्रप्रतिफलनं दधाति। किमिव ? अश्रान्तविकचम्; अनवरतविकस्वरम्, चन्द्रान्निरातङ्कम्; अम्लानं, निजहृदयपङ्केरुहमिव; दर्पणीभूते दिनमणौ तव वदनं प्रतिबिम्बितम्, तस्य हृदयकमलायत इति भावः । समानीतः पद्भ्यामिति क्वचित्पाठः । तव चरणाभ्या मुकुरतां समानीतः । तादर्थ्ये चतुर्थी । तव चरणार्थं मुकुरुतां प्राप्त इत्यर्थः । तव चरणप्रतिफलनयोग्योऽयं वदनप्रतिबिम्बधारणे का शक्तिरस्य । तथापि तव चरणकरुणया वदनप्रतिबिम्बं दधानेति भावः ॥ ५३ ॥

इदानीं श्रीदेव्याश्चन्द्रमण्डलं भोगसाधनसंपूर्णकरण्डत्वेनोत्प्रेक्षते—

**कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं**
**कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् ।**
**अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं**
**विधिर्भूयो भूयो निबिडयति नूनं तव कृते ॥ ५४ ॥**

**कलङ्क** इति । कलङ्कः कस्तूरी; कलङ्को न भवति । जलमयम् इदं रजनिकरबिम्बं मरकतकरण्डं, न चन्द्रबिम्बम् । अत एव कलाभिः कर्पूरैः; कला न भवति,

कान्तिरग्निरूप इत्यर्थः। तृतीया; त्रिसंख्यापूरका। "त्रेः संप्रसारणं च" इति तीयप्रत्ययः। ते भवत्या दृष्टिः दिवसनिशयोरहोरात्रयोः अन्तरे अन्तराले सायप्रातरात्मना चरतीति तां संध्या पितृप्रसूम्; "संध्या पितृप्रसूनयोः" इत्यमरः। समाधत्ते विदधाति। तद्विधाय अग्निहोत्रादिकर्मसु प्रवर्तयतीत्यर्थः। अत्र भगवत्या आगमप्रसिद्धसूर्यचन्द्राग्निरूपनेत्रत्रितयधारणरूपया स्वभावोक्त्या दिवसनिशाद्युपलक्षितमासर्त्वादिकालसृष्टिकारणताकथनात् कालानवच्छेद्यत्वशिवाभिन्नत्वयोर्वस्तुनोः प्रतीतेरलंकारेण वस्तुध्वनिः॥ ७॥

**विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः**
**कृपाधाराधारा किमपि मधुराभोगवतिका।**
**अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया**
**ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते॥ ८॥**

### लक्ष्मीधरा

**विशालेति। विशाला**; विपुला, **कल्याणी**; मङ्गलात्मिका, **स्फुटरुचिः**; प्रस्फुटकान्तिः, **अयोध्या**; योद्धुमशक्या, **कुवलयैः**; इन्दीवरैः, **कृपाधाराधारा**; कृपाधाराणां करुणाप्रवाहाणां आधारभूता। आधारशब्दस्य कर्मणि घञन्तत्वात् विशेष्यनिघ्नत्वेन रूपकत्वम्। **किमपि मधुरा**; अव्यक्तमधुरा। **आभोगवतिका**; अभोगः अन्तःपरिणाहः, दैर्घ्यमिति यावत्। **अवन्ती**; रक्षिका **दृष्टिः ते** नयनं, **बहुनगरविस्तारविजया**; बहूनां नगराणां विस्तारेण सामस्त्येन विजया स्फुरन्ती। **ध्रुवं**; निश्चयम्। **तत्तन्नामव्यवहरणयोग्या**; तानि तानि च नामानि तत्तन्नामानि विशाला कल्याणी अयोध्या धारा मधुरा भोगवती अवन्ती विजया इत्यष्ट नगरनामानि तैः यद्व्यवहरणं व्यवहारः तत्र योग्या **विजयते** सर्वोत्कर्षेणं वर्तते।

अत्रेत्थं पदयोजना—हे भगवति! ते दृष्टिः विशाला कल्याणी स्फुटरुचिः कुवलयैः अयोध्या कृपाधाराधारा किमपि मधुरा आभोगवतिका अवन्ती बहुनगरविस्तारविजया तत्तन्नामव्यवहरणयोग्या ध्रुवं विजयते।

अत्रेदमनुसंधेयम्—विशालाप्रभृतयो विजयान्ता अष्ट नगर्यः अष्ट दृष्टयश्च; विशाला नाम दृष्टिः अन्तर्विकासरूपा। कल्याणीदृष्टिः विस्मिता। अयोध्यादृष्टिः

स्मेरकनीनिका। धारादृष्टिः अलसा। मधुरादृष्टिः वलिता। भोगवतीदृष्टिः स्निग्धा। अवन्तीदृष्टिः मुग्धा। विजयादृष्टिः प्रान्तकनीनिका, आकेकराख्या दृष्टिः। एता अष्ट दृष्टयः सर्वयोषित्समानाः। भगवत्यां तु विशेषः। एता दृष्टयः यथाक्रमं संक्षोभणाकर्षणद्रावणोन्मादवश्योच्चाटनविद्वेषणमारणक्रियासु संभिन्नाः।

एतदुक्तं भवति—भगवती यत्र प्रदेशे स्थित्वा अन्तर्विकासयुक्ततया विशालाख्यया दृष्ट्या जनसंक्षोभमकरोत्, स देशो विशालानगरी। यत्र प्रदेशे स्थित्वा सा आकेकरया दृष्ट्या विजयाख्यया शत्रुमारणमकरोत्, स देशो विजयानगरी। एवं मध्यवर्तिनीना षण्णां पुरां नामधेयान्यूह्यानि। यथोक्तं भगवत्पादैः—"विशालाद्याः भगवत्याः दृष्टिविशेषाः संक्षोभादिकर्मसाधनभूताः अन्तर्विकासादिरूपाश्चेति सर्वमनवद्यम्" इति। एतदेव स्पष्टीकृतं तद्व्याख्याकारैः तत्र तत एवावधार्यम् ॥ ८ ॥

### अरुणामोदिनी

नयनोर्वीक्षाविशेष सचमत्कारं वर्णयति—विशालेति। हे देवि! विशाला; विस्तृता नित्यविकासितेत्यर्थः। कल्याणी; असूयादिराहित्येन नित्यप्रसन्ना भजतां क्षेमकारिणी च। स्फुटरुचिः; अतिविस्पष्टकान्तिः, अत एव कुवलयैः नेत्रोपमानत्वेन गर्वितैरिन्दीवरैः कुत्सितानि वलयमिवेति व्युत्पत्या निर्गुणैरिति भावः। अयोध्या; योद्धुमशक्या, अत्युत्कटगुणयुक्तत्वादिति भावः। कृपायाः करुणारसस्याधारा आधारभूता धारा दृष्टिसततिर्यस्याः सा। किमपि; अनिर्वचनीयम्, मधुरा हृद्या, भोगः सुखानुभवः सोऽस्यास्तीति भोगवती, सैव भोगवतिका; कामेश्वरविषयहेलाविलासवतीत्यर्थः। यत्तूक्तम्—आभोगवतीति पदच्छेद कृत्वा आभोगवती दैर्घ्यवतीति तच्चिन्त्यम्। दैर्घ्यकथनलोभेनाकारप्रश्लेषे वक्ष्यमाणभोगवतीति पुरनामानिष्वत्तेः, नद्यो भोगवतीति व्यवहृत्य भोगवतीति वक्तुं युक्तमिति। अवन्ती; भक्तजनरक्षणं कुर्वाणा ते भवत्या दृष्टिः बहूनां नगराणां विशालादीना पुराणां नगाः सन्त्यस्मिन्निति व्युत्पत्या नगमात्रसद्भावः, न तु वैपुल्यादिगुणयोग इति ध्वनिः। विस्तारमुपलक्षणतया वैपुल्यादिक विजयत इति सासति विशालादिसप्तपुरवैपुल्याद्यधिकवैपुल्यसत्त्वादिति भावः। पञ्चम्यन्तपाठे विस्तारभङ्गकरणादित्यर्थः। तानि तानि च तानि नामानि च तत्तन्नामानि तेषां तेषां विशालादिपुराणां नामानीति वा तैर्व्यवहरणस्य योग्या विशाला कल्याणी अयोध्या धारा मधुरा भोगवती अवन्तीपुरनामभिर्व्यवहारार्हा सती विजयते; सर्वोत्कर्षेण वर्तते।

"विपराभ्या जेः" इत्यात्मनेपदम्। वैपुल्यादिगुणयुक्ता भवद्दृष्टिरन्वर्थाभिधानानि सप्तनगराणि जित्वा तत्तन्नामभिर्व्यवह्रियते। यथा अतिप्रबलः प्रभुः शत्रून् जित्वा तत्पदमापन्न तन्नाम्ना व्यवह्रियते तद्वदिति भावः। भवद्विलोकविशेषप्रसार एव विशालदिनगर्य इति ध्वनिः। ध्रुवमित्युत्प्रेक्षायाम्। परिकरोत्प्रेक्षयोः सकरः॥ ८॥

---

**कवीनां संदर्भस्तबकमकरन्दैकरसिकं**
**कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम्।**
**अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला-**
**वसूयासंसर्गादलिकनयनं किंचिदरुणम्॥ ९॥**

लक्ष्मीधरा

**कवीनामिति। कवीनाम्;** कवीश्वरणाम्, **संदर्भस्तबकमकरन्दैकरसिकम्;** संदर्भ काव्यसंदर्भ, स एव स्तबकः पुष्पगुच्छं तत्र, मकरन्दे एकं मुख्यं रसिकं मुख्यरसिकं, काव्यामृतास्वादैकरसिकमित्यर्थः। **कटाक्षव्याक्षेपभ्रमरकलभौ;** कटाक्षावेव व्याक्षेपौ व्याजौ ययोस्तौ, तौ च तौ भ्रमरकलभौ चेति समासः। भ्रमरकलभौ द्विरेफडिम्भौ। अत्र यद्यपि कलभशब्दः करिडिम्भवचनः, महाकविप्रयोगप्राचुर्यवशात् विशेषसामान्यलक्षणौ भ्रमरकलभाविति। **कर्णयुगलं;** कर्णयोः श्रवणयोः युग्मम्, **अमुञ्चन्तौ;** रसास्वादलम्पटतया अत्यजन्तौ दृष्ट्वा, तृतीयस्य नयनस्य ऊर्ध्वस्थितत्वात। **तव नवरसास्वादतरलौ;** नवरसाः शृङ्गाराद्यः नवत्वसंख्यायुक्ताः रसा. नवरसाः। शाकपार्थिवादित्वादुत्तरपदलोपः; अन्यथा, "द्विगोः" इति ङीषि कृते नवरसी इति स्यात्। नवरसानामास्वादे भोगे तरलौ लम्पटौ। **असूयासंसर्गात्;** असूया ईर्ष्या तस्याः संसर्गः संबन्धः तस्मात्। **अलिकनयनं;** निटिलनेत्रं **किंचिदरुणं** किंचित्कोपादिवारुणम्।

अत्रेत्थं पदयोजना—हे भगवति! कवीनां संदर्भस्तबकमकरन्दैकरसिकं तव कर्णयुगलं कटाक्षव्याक्षेपभ्रमरकलभौ नवरसास्वादतरलौ अमुञ्चन्तौ दृष्ट्वा असूयासंसर्गात् अलिकनयनं किंचिदरुणम्। अयमर्थः—नयनत्रयमध्ये द्वयोरमृतपाने सिद्धे एकस्य नयनस्य असूया युज्यते। आकर्णान्तनेत्रा भगवती इति वस्तुध्वनिः।

अत्र अतिशयोक्तिरलंकारः; श्रवणयोः काव्यामृतास्वादसंबन्धाभावेऽपि संबन्धकथनात्। भ्रमरकलभावित्यत्र अपह्नवालंकारः। यद्वा—रूपकम्, कटाक्षव्याक्षेपः कटाक्षात्मतया अवस्थितिरिति व्याख्येयम्। अतिशयोक्त्यन्तरमपि, भ्रमरकलभयोः मकरन्दास्वादसंबन्धेऽपि संबन्धकथनात्। कविकृतवस्तुकृतसौन्दर्ययोरभेदाध्यवसाया-दतिशयोक्त्यन्तरमपि। भ्रमरकलभयोः मकरन्दास्वादासंबन्धेऽपि संबन्धकथनात् कवि-कृतवस्तुकृतसौन्दर्ययोरभेदाध्यवसायात् अतिशयोक्त्योरनुप्राण्यनुप्राणकभावः संबन्धः। अपह्नवस्त्वङ्गाङ्गिभावेन संकीर्णः ॥ ९ ॥

## अरुणामोदिनी

ललाटनयनस्यारुण्यमुत्प्रेक्षते—कवीनामिति। हे देवि! तव; भवत्या अलिकन-यनं ललाटसंस्थितं नयनं वह्न्यात्मकं नेत्रं कर्तृ, कटाक्षयोर्यद्गतागतिविश्रान्तिवैचित्र्येण विवर्तनम्; "तारकायाः कलाभिज्ञास्त कटाक्षं प्रचक्षते" इत्युक्तलक्षणयोरपाङ्गदर्शनयोर्व्या-क्षेपो विलासावेव भ्रमरकलभौ द्विरेफडिम्भौ, कलभशब्दः करिशिशुवचनोऽपि सामान्यलक्ष-णया प्रयुक्तो न दुष्ट इत्युक्तं प्राक्। यद्वा—कलेन कान्तिविशेषेण भात इति वा कलभत इति वा भ्रमरौ कलभभ्रमराविति वा "वाहिताग्न्यादिषु" इति साधुः। भ्रमरौ कलभाविवेति वा। कवीनां कवयितृश्रेष्ठानां विष्ण्वादीनां संदर्भः वर्णनात्मा काव्यप्रबन्धः; स एव स्तबको गुच्छः; ललितरसात्मकपद्यमयः, तत्र यो मकरन्दरसः रसभावादिस्तस्मिन् तदास्वद एवैकस्मिन् रसिकम्, शृङ्गाररसभरितकाव्यप्रबन्धाकर्णनोत्सुकमित्यर्थः। एतेन भगवत्या काव्यप्रबन्धादरः सूचितः। कर्णयोर्युगलं श्रवणयुगम्; नवो नूतनो रसः शृङ्गारः, तस्य रसे आस्वादे तरलावतिचपलौ; अत एवामुञ्चन्तौ अत्यजन्तौ श्रवणपर्यन्तगामिनौ सन्तौ दृष्ट्वा अवेक्ष्य असूया परोत्कर्षासहिष्णुत्वम्; तस्याः ससर्गात् सपर्कादिवेति गम्या हेतूत्प्रेक्षा। स्वस्योर्ध्वस्थितत्वेन कर्णयुगलसमीपव्याप्त्यभावात्तत्पर्यन्तगामिनयनद्वये ईर्ष्या-संयोगादेवेत्यर्थः। किंचिदीषदरुणं रक्तवर्णं जातमिति शेषः। अत्र समानेषु केषा-चित्सौख्यलाभे तत्समानस्यालब्धसौख्यस्यासूयादन्यस्य नयनारुण्यत्वप्रसिद्धेरग्निरूपत्वेन न स्वभावारुणस्यापि ललाटलोचनस्य नयनत्वेन समानानां त्रयाणामपि द्वयोस्तयोः कर्णान्तविश्रान्तिरसास्वादलाभे अलब्धतद्रसस्यारुण्यमुत्प्रेक्षते। सा च कवीनां संदर्भे-त्यादिरूपकानुप्राणिता। तया च स्वाभाविकारुण्यतिरोधानस्य प्रतीतेरलंकारेणा-लंकारध्वनिः ॥ ९ ॥

**शिवे शृङ्गारार्द्रा तदितरजने कुत्सनपरा**
**सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।**
**हराहिभ्यो भीता सरसिरुहसौभाग्यजननी**
**सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा ॥ १० ॥**

### लक्ष्मीधरा

शिव इति । **शिवे;** सदाशिवे । **शृङ्गारार्द्रा;** शृङ्गारेण शृङ्गाररसेन, आर्द्रा आप्लुता । **तदितरजने;** तस्मात् सदाशिवात् इतरजने तद्विषये । **कुत्सनपरा;** बीभत्सरसाविष्टा, अत्र कुत्सनं बीभत्सरसास्वादनजन्यान्तःकरणमुकुलीभावः कार्यकारणयोरभेदेन रसत्वेनोपचरितः । **सरोषा;** रौद्ररसाविष्टा, रोषस्य स्थायिभावस्य रसत्वोक्तिरुपचारात् । **गङ्गायाम्;** सपत्न्यामिति शेषः । **गिरिशचरिते;** त्रिपुरविजयादौ । **विस्मयवती;** अद्भुतरसाविष्टा । गिरिशनयने इति पाठे तृतीयनयनेनैव मन्मथदहनम्, तादृशनयन एव इदानीं साकूतदर्शनमित्यद्भुतमिति ध्येयम् । **हराहिभ्यः;** हरस्य परमेश्वरस्य अहिभ्यः सर्पेभ्यः भीता भयरसाविष्टा । **सरसिरुहसौभाग्यजननी;** सरसिरुहाणां सौभाग्यं रक्तिमा, तस्य जननी उत्पादिका कोकनदकान्तिः रक्तवर्णा, वीररसाविष्टेत्यर्थः । अत्रानुभावेन नयनरक्तिम्ना वीररसो ध्वनितः । **सखीषु;** वयस्यासु, **स्मेरा;** स्तब्धकनीनिका । तत्राप्यनुभावेन हास्यरसो ध्वन्यते । **ते** तव **मयि जननि!** हे मातः! **दृष्टिः सकरुणा;** करुणरसाविष्टा ।

अत्रेत्थं पदयोजना—हे जननि! ते दृष्टिः शिवे शृङ्गारार्द्रा तदितरजने कुत्सनपरा, गङ्गाया सरोषा, गिरिशचरिते विस्मयवती, हराहिभ्यो भीता, सरसिरुहसौभाग्यजननी, सखीषु स्मेरा, मयि सकरुणा ।

अत्र परस्परविरुद्धानां रसानामेकत्र नयने समावेशकथनात् विरोधालंकारः; अवस्थाभेदेन परिहारात् तस्य विरोधस्य आभासत्वम् । तल्लक्षणं तु, "विरोधाभासो विरोध" इति । "विक्रियाजनका एव रसा" इत्यष्टौ रसाः । **भरतमते—** "शान्तस्य निर्विकारत्वान्न शान्तं मेनिरे रसम्" इति शान्तस्य रसत्वाभावात् अष्टौ रसाः संगृहीताः ॥ १० ॥

## अरुणामोदिनी

अथैकस्या एव भागवतदृष्टेरधिकारभेदेन नवरसावासतां संभावयति—**शिव इति**। हे देवि! ते नवरसावासभूताया भवत्या दृष्टिर्वीक्षणम्। शिवो व्याख्यातः। तस्मिन् समस्तकल्याणगुणाधारे सदाशिवे भवदनुग्रहलब्धनाम्नि, शृङ्गं प्राधान्यमियर्ति रसेष्विति शृङ्गारः। प्राधान्यं चोक्तं ध्वनिकृता—

"शृङ्गार एव मधुरः परप्रह्लादको रस।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति॥"

इति। तेन सकलजनानन्दकदलक्षमकाममूलकेन सभोगात्प्रागिच्छाविशेषलक्षणरतिस्थायिकेन कटाक्षवीक्षणहावभावाद्यनुभावेन नवरसप्रधानेन शृङ्गाराख्येन रसेनार्द्रा आप्लुता, शृङ्गाररससपृक्ता भवतीत्यर्थः। शृङ्गाररसशब्दोऽत्र रत्याख्यस्थायिभावपरो व्याख्येयः। उत्तरत्र स्थायिभावानामेव निरूपणादिति। तस्मादितरस्तदितरः, स चासौ जनश्च तदितरजनः तस्मिन् शिवाद्यन्यस्मिन् शिवे जने पृथग्जने, मुखे इति पाठे तदन्यमुखे, कुत्सनपरा, जुगुप्सासक्ता इति **बीभत्सरसोक्ति**। जुगुप्साया बीभत्सस्थायित्वात्। एतेन पातिव्रत्यातिशयः सूचितः। तथा गङ्गाया, शिवशिरोऽवस्थितायां सपत्न्याम्, सरोषा; रोषेण क्रोधेन सहितेति **रौद्ररसोक्तिः**। रोषस्य रौद्रस्थायित्वात्। तथा गिरिशस्य परमेश्वरस्य गिरौ शेत इति व्युत्पत्त्या पार्वतीयत्वेन कारुण्य सामर्थ्याभावश्च सूच्यते। तस्य चरिते दिगम्बरत्वचर्माम्बरत्वशवभस्मविलेपनत्वादिरूपस्वमहिमोपलब्धत्रिपुरसुन्दरादिरूपे वा विस्मयवती आश्चर्यवतीत्य**द्भुतरसोक्तिः**। विस्मयस्याद्भुतस्थायित्वात्। गिरिशनयनेति पाठे गिरिशस्य नयने मदनदाहितरि वह्निरूपे नेत्रे विस्मयवतीत्यर्थः। अतिवैराग्यप्रकाशनाय पुरा दाहितमदनेऽप्यस्मिन्निदानीं तदुत्पत्तिहेत्वनुभावदर्शनादिति भावः। अनेन **शान्तरसोक्तिः**। तथा हराहिभ्यः शिवभूषणीभूतसर्पेभ्यो भीता त्रस्ता। भूषणतायामपि दुर्दमविषाग्निदग्धाना तेषा भीहेतुत्वादिति **भयानकरसोक्तिः**। भयस्य भयानकस्थायित्वात्। तथा सरसिरुहाणा पङ्केरुहाणाम्, "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वः। सौभाग्य सुभगत्वम्। "हृद्भगसिन्ध्वन्ते—" इत्यादिनोभयपदवृद्धिः। जयतीति सेति **वीररसोक्तिः**। जयोत्साहमूलकत्वात्तस्य च वीरस्थायित्वात्। तथा सखीषु समानप्राणासु वयस्यासु स्मेरा मन्दमधुरत्वादिगुणशीलहासविशेषवती;

"अपरिच्छिन्नविषयं मन्दं मधुरमीरितम्।
स्फुरद्भ्रूपक्ष्मतारं यत्तत्स्मेरमिति कथ्यते॥"

इति लक्षणात्। इति हास्यरसोक्तिः। स्मेरस्य हासघटितत्वात्तस्य च हास्यस्थायित्वात्। तथा हे जननि! भक्तजनावनदीक्षिते मातः! देवि! मयि भक्तजने स्वस्मिन् भगवत्पादाभिधान इत्यर्थः। करुणा दया तया सहिता सकरुणा दयारसाप्लुतेति करुणारसोक्ति। नेतीति शेषः। जयतीति पाठे सबुद्धिपदमध्याहार्यम्। अत्र—

"शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताख्या(रसा) नव समीरिताः॥"

इति वचनोपात्तनवरसस्थायिनाम्;

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमा. स्थायिभावाः प्रकीर्तिताः॥"

इत्युक्ताना रत्यादिभावाना निबन्धनात् भगवतीदृष्टेस्तत्तदधिकारिभेदेन सर्वरसमयत्वोक्तिद्वारा शिवादिसाधारण्येन भक्तेः स्वस्मिन्नपि निरन्तरकरुणामयत्वमुक्तम्। अत्र—

"सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान्।
यावद्रसं वर्तमानः स्थायीभाव उदाहृतः॥"

इति दशरूपकोक्तेः। सजातीयविजातीयानभिभूततया यावदनुभवावस्थानलक्षणस्थायित्वघटितस्य;

"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानः स्वादुत्व स्थायीभावो रसः स्मृतः॥"

इयुक्तलक्षणस्य रसस्य प्रकाशानन्दचिद्रूपरसता प्रतिपद्यते। "प्रकृष्यमाणो यो भावः स स्थायीति निगद्यते।" इत्युक्तेः स्थायीभूतरत्यादिभावाव्यतिरेकात् प्रधानाना तेषामेवात्र निरूपणं कृतमित्यवगन्तव्यम्। न च;

"शृङ्गारबीभत्सरसौ तथा वीरभयानकौ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः॥"

इति वचनाद्भिन्नोपाधिकत्वेन परस्परविरुद्धाना रसानामेकत्र समावेशविरोधः शङ्क्यः। रसाना परस्परविरोधेऽपि कविप्रौढोक्तिसमाश्रयणेनैकत्र समावेशो न विरुध्यत इति विद्यानाथोक्तेः। देव्या अलौकिकमहिमत्वेन वा तदुपपत्तेः। अथवा शृङ्गारस्यैवेतर-

रसानामपि त्रिवर्गोपयोगित्वात् परस्परसौहार्दमस्त्येवेति केषांचिन्मतेन न विरोधः। यथोक्तं भावप्रकाशे—

"यथा कामोपयोग्यत्र शृङ्गारो दृश्यते रसः।
अर्थोपयोगी वीरः स्याद्रौद्रोऽपि स्यात्क्वचित्क्वचित् ॥
रक्षारूपेण धर्मार्थोपयोगिकरुणो भवेत्।
अद्भुतोऽपि मनःप्रीतिकरत्वात्काम्यसाध्यकृत् ॥
तद्भयानकबीभत्सहास्याः कार्येषु योजिताः।
तत्तन्नेतृमयो वृत्तिवशात्प्रायस्त्रिवर्गगाः ॥"

इति। यद्यपि—"रसः सर्वोऽपि संपूर्णास्तिरोधत्ते रसान्तरम्।" इति वचनादेक एव रसः प्रतीयते; तथापि महाकविप्रसिद्ध्या रससंकरोऽप्यस्तीति विद्यानाथादिभिः सोदाहरणमुक्त(मेवेति) न तत्र विवादः। महाकविप्रयोगश्च सर्वरसानामेकत्र समावेशरूपो दृश्यते। यथा शृङ्गारतिलके—

"शृङ्गारी गिरिजानने सकरुणो रत्या प्रवीरः स्मरे
बीभत्सोऽस्थि(भि) रुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्व(र)सात्मकः पशुपतिर्भूयात्सतां भूतये ॥"

इति। गिरिशचरित इत्यनेन वैराग्यद्योतकेन शान्तरसस्य संग्रहान्नवापि रसा निरूपिताः।

यत्तूक्तं लक्ष्मीधरेण—"भरतमते शान्तरसस्यानङ्गीकारात्, "न शान्तं मेनिरे रसम्" इति तस्य सत्त्वाभा(वा)दष्टावेव रसाः संगृहीताः" इति, तद्भ्रान्तोत्तरम्। "रतिर्हासश्च शोकश्च" इत्यादिना अष्टौ स्थायिनः परिगणय्य, चशब्देन शान्तरसस्थायिन शमं सूचयतो भरतमुनेरभिप्रायविदा नवरसपक्षमितरदूषणपूर्वकं सिद्धान्तीकृत्य लक्ष्यलक्षणनिर्वचनपूर्वकं शान्तरसनिरूपणासक्ताना रुद्रटविद्यानाथादीनामसंमतत्वात्। "न शान्त मेनिरे रसम्" इत्यत्रापि पृच्छामः। किं शान्तस्य निर्भरानन्दत्वाभावान्न रसता, किं वैतदन्येष्वन्तर्भावात्। नाद्यः, तस्य निर्भरानन्दरूपत्वात्। नेतरः; तस्य रसान्तरेष्वन्तर्भावाभावात्। ननु त्रिविधो वीरः—दानवीरः, धर्मवीरः, युद्धवीरश्चेति। तत्र धर्मवीरेऽन्तर्भावः स्यादिति वाच्यम्। "अहमेवविधः इत्युत्साहापरपर्यायाभि-

मानमयो वीरः। सर्वाहंकारप्रशमनैकरूपः शान्तः" इति तस्य तत्रान्तर्भावाभावात्। विस्तरस्त्वस्मत्कृतरसतरङ्गिणीविबुधामोदिन्यामनुसधेयः। पदान्तरेण तल्लाभे तदविचार्य निर्धारणापूर्वकसंग्रहणोक्तिरपि चिन्त्या।

यच्चोक्तमाश्रमिभिः—"शृङ्गारविरोधित्वाच्छान्तो न प्रयुक्तः" इति, तदपि चिन्त्यम्। तद्विरोधितस्य बीभत्सादिसाधारणत्वेन तन्निरूपणानर्थक्यापत्तेः। वटयक्षन्यायेन गतानुगत्या समागतवीरादिरसप्रसिद्धिनिरासपूर्वकं शृङ्गारप्रकाशकारमतावलम्बेन तस्यैव निरूपणीयत्वप्रसक्तेश्च, अस्मदुक्तरीत्या विरोधपरिहाराच्च। अतो नवरसपक्ष एवाचार्याभिमतः। तत्र च देवीदृष्टेः सार्वकालिक शृङ्गारकरुणारसमयत्वं व्याख्यातुं स्वपदेनाभिधानम्। इतररसानां कादाचित्कतामभिधातुं स्थायिभिरभिधानमिति रहस्यम्। अत्र रसवदलंकारः॥ १०॥

**गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती**
**पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले।**
**इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके**
**तवाकर्णाकृष्टस्मरशरविलासं कलयतः॥ ११॥**

लक्ष्मीधरा

**गत** इति। **गते**; प्राप्ते, **कर्णाभ्यर्णे**; कर्णयोः समीपं, **गरुत इव**; कङ्कपत्राणीव **पक्ष्माणि** दधती। **पुरां**; पुराणां, **भेत्तुः**; भेदकस्य, **चित्तप्रशमरसविद्रावणफले**; चित्ते अन्तःकरणे प्रशमरसः नैस्पृह्यमित्यर्थः; तस्य विद्रावणं विनाशनं शृङ्गाररसोत्पादनमिति यावत्; तदेव फलं प्रयोजनं ययोस्ते, चित्तप्रशमरसविद्रावणफले। अत्र फलशब्देन अध्यवसितेन अयोमयी बाणाग्रसूची कथ्यते। **इमे**; हृदयाम्बुजे परिदृश्यमाने, **नेत्रे**; नयने, **गोत्राधरपतिकुलोत्तंसकलिके!** गोत्रा भूमिः धरतीति धरः पचाद्यच्, गोत्रायाः धरो गोत्राधरः, अन्यथा गोत्रां धारयतीति विग्रहे कर्मण्यणि प्राप्तौ गोत्राधार इति स्यात्। अनेनैवाभिप्रायेण शक्तिधर इत्यत्र, "शक्तेः धरः शक्तिधरः" इत्युक्तं **क्षीरस्वामिना**। गोत्राधरपतिः हिमवान्, तस्य कुलोत्तंसकलिका कोरकः तस्याः संबुद्धि। **तव**; भवत्याः, **आकर्णाकृष्टस्मर-**

**शरविलासं;** कर्णपर्यन्तमाकृष्टयोः स्मरशरयोः मन्मथबाणयोः विलासं सौभाग्यं **कलयतः;** कुरुतः। लट्परस्मैपदद्विवचनान्तम्।

अत्रेत्थं पदयोजना—हे गोत्राधरपतिकुलोत्तंसकलिके! तव इमे नेत्रे कर्णाभ्यर्णं गते पक्ष्माणि गरुत इव दधती पुरा भेत्तुः चित्तप्रशमरसविद्रावणफले आकर्णाकृष्टस्मरशरविलासं कलयतः।

अयमर्थः—पञ्चबाणस्य स्त्रीणां कटाक्षः षष्ठो बाणः। पञ्चबाण इति प्रसिद्धिः प्राचुर्याभिप्रायेण। कटाक्षात्मकबाणो बाणपञ्चकतुल्य इति न षड्बाण इति व्यवहारः। अत्र निदर्शनालंकारः; स्मरशरविलाससदृशविलासकरणप्रतिभानात् प्रतिबिम्बाक्षेपात्॥ ११॥

## अरुणामोदिनी

अथ नयने एव मदनचापत्वेनाह—गते इति। गोत्राधरपतिर्हिमवान् तस्य कुलोत्तसकलिके वंशशेखरभूषणकल्पवृक्षकोरके देवि! गरुतः; कङ्कपत्राणीव पक्ष्माणि लोमानि दधति दधाने तथा कर्णाभ्यर्णं कर्णोपकण्ठ गते प्राप्ते, आकर्णपूर्णे इत्यर्थः। पुरा भेत्तुः, त्रिपुरान्तकस्य; "तृजकाभ्यां कर्तरि" इति कर्तरि षष्ठी। एतेन अलोकसाधारणदुर्जयशत्रुजयादौ स्थिरप्रयत्नलक्षणोत्साहस्थायिकस्य वीरस्य प्रतीतेः शृङ्गारस्यावकाशाभावः सूचितः। अस्यापि शिवस्य चेतयते आकाङ्क्षयते विषयादीनीति चित्तं मनः; तस्य प्रगतः शमः शान्तिर्यस्मात् प्रशमः शान्त्यपकर्षकः। स चासौ रसश्च शान्तविरोधी वीररसः पुरा भेत्तुरित्यनेन सूचितः। प्रशमरसपदस्य शान्तरसपरताव्याख्यान पुरा भेत्तुरिति वीररससूचनपरकवितात्पर्याननुसारित्वादुपेक्ष्यम्। तस्य विद्रावणमपकर्षणमेव फल प्रयोजनम्। तदेव फलं बाणाग्रं च ययोस्ते, वीररसपलायनीकरण चतुरे इत्यर्थः। यद्वा—पुरा भेत्तुरिति रौद्रतया अनुदितशृङ्गारस्यापि शिवस्य चित्तं प्रशमयति भूषयतीति चित्तप्रशम· शृङ्गारोऽतिमधुरः, तया सर्वप्राणिहृदयगमत्वात् चित्तजन्ममूलकत्वाच्च। ते नयनविद्रावणं द्रवीकरणं शृङ्गारप्रधानीकरणमित्यर्थः। तदेव फलं ययोस्ते। अनुदितशृङ्गारस्यापि तदुत्पादनकुशले इत्यतिमहत्वोक्तिः। तव सकललोक(नियम) करणचतुराया भवत्या इमे ध्यायतो मम पुरस्ताद्भात एव परिदृश्यमाने नेत्रे कर्तृणी, आकर्णं कर्णपर्यन्तम् आकृष्टयोः स्मरशरयोः मदनबाणयोः परिचितसंमोहनदक्षयोरित्यर्थः। विलासं सौभाग्यं कलयत आददतः तत्सदृशीभवत इत्यर्थः। गरुद्द्वारा कर्णव्यमनादिना अतिक्रूर-

त्रिपुरान्तकचित्ताकर्षणेन चाकर्णाकृष्टमदनबाणवद्भात इत्यभिप्रायः। उपमानिदर्शनयोः संकरः। तथाच भगवतीनेत्रयोरतिदुर्घटकार्यकरणसामर्थ्यं प्रतीयते ॥ ११ ॥

**विभक्तत्रैवर्ण्यं [1]व्यतिकरितलीलाञ्जनतया**
**विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते।**
**पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्**
**रजः सत्त्वं बिभ्रत्तम इव गुणानां त्रयमिव ॥ १२ ॥**

लक्ष्मीधरा

विभक्तेति। **विभक्तत्रैवर्ण्यं;** विभक्तं परस्परासंकीर्णं त्रैवर्ण्यं त्रयो वर्णाः सितासितरक्ताः यस्येति बहुव्रीहिः, स्वार्थे ष्यञ्। महाभाग्यपुरुषाणां नयने रक्तरेखाः सन्ति, नयनगोलद्वयं श्वेतम्। यद्यपि कनीनिका नीला, तृतीयनयने कनीनिकायाः नैल्याभावादित्याह—**व्यतिकरितनीलाञ्जनतयेति।** व्यतिकरितं संवलितं लीलार्थं विलासार्थं धृतमञ्जनं यस्य तत् तस्य भावस्तत्ता तया। तृतीयनयन-गोलस्य श्वैत्यमङ्गीकृत्योक्तम्। **विभाति;** विराजते, **त्वन्नेत्रत्रितयं;** तव नेत्राणां त्रितयम्, **इदं;** परिदृश्यमानम्। **ईशानदयिते!** ईशानस्य महादेवस्य दयिता प्रेयसी तस्याः संबुद्धिः। **पुनः स्रष्टुं;** गतब्रह्माण्डानन्तरमस्मिन् ब्रह्माण्डे भूयो निर्मातुं, **देवान्** देवनधर्मयुक्तान्, **द्रुहिणहरिरुद्रानुपरतान्;** आत्मनि विलीनान्, **रजः;** रजोगुणः, **सत्त्वं;** सत्त्वगुणः, **बिभ्रत्;** दधत्, **तमः**, तमोगुण इति, एवं **गुणानां** सत्त्वरजस्तमः-संज्ञिकानां **त्रयं** त्रितयम् इव।

अत्रेत्थं पदयोजना—हे ईशानदयिते! इदं त्वन्नेत्रत्रितयं व्यतिकरितलीला-ञ्जनतया विभक्तत्रैवर्ण्यम् उपरतान् द्रुहिणहरिरुद्रान् देवान् पुनः स्रष्टुं रजः सत्त्वं तम इति गुणानां त्रयमिव बिभ्रत् विभाति।

अत्र सत्त्वगुणः श्वेतवर्णः, रजोगुणो रक्तवर्णः, तमोगुणो नीलवर्ण इति कविप्रसिद्धिः। तम इति निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः; परिगणनस्य प्रायिकत्वादिति निपातेतिशब्देनाभिधानात् रजःसत्त्वतमःशब्दाः प्रथमान्ताः। यद्वा—द्वितीयान्ताः; निपाताभिधानस्य प्रायिकत्वात्। यथोक्तं **वाग्भटेन**—

[1] "कलित॰ इत्यरुणामोदिनी।

"हिंसास्तेयान्यथाकामं पैशुन्यपुरुषानृतम् ।
संभिन्नालाप व्यापादमभिध्या दृग्विपर्ययम् ।
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥"

इति ।

अत्रोत्प्रेक्षालंकारः; नयनगतस्य श्वेतरक्तनीलरेखात्रितयस्य सत्त्वरजस्तमोगुणत्वेनोत्प्रेक्षणात् । अत्र भगवत्याः नयनाञ्जनदर्शनादेव सृष्टिस्थितिलया इति महानतिशयो ध्वन्यत इत्यलंकारेण वस्तुध्वनिः ॥ १२ ॥

## अरुणामोदिनी

एवं नेत्रद्वयमुपवर्ण्य त्रितयमप्येकदा विवर्णयिषुस्त्रिगुणात्मकप्रकृतिरूपिण्या देव्या हरिहरद्रुहिणसृष्टिकारणस्य गुणत्रयस्य नित्यनिवासं संभावयति—विभक्तेति । ईशानाख्यश्चतुर्थः पुत्रः द्रुहिणहरिरुद्राणा कारणभूतो दयितः प्रियः प्रेमास्पदो यस्या सा ईशानदयिता, तस्याः सबुद्धिः; हे ईशानदयिते! ब्रह्मादिकारणे! देवि! व्यतिकलितं सपृक्तं नीलमञ्जनं येषु तानि तेषा भावस्तत्ता तया, नीलाञ्जनप्रधानतयेत्यर्थ । इदं च तृतीयनयने नैल्यसूचनार्थमिति लक्ष्मीधरः । नीलाम्बुजरुचेति पाठे इन्दीवरकान्त्येत्यर्थः । त्रयो वर्णा. श्वेतरक्तनीलाख्याः त्रैवर्ण्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । अत एव त्रयाणा वर्णाना भावस्त्रैवर्ण्यमिति लक्ष्मीधरव्याख्यानं भ्रान्तम् । विभक्तं प्रत्येकशो विविक्त त्रैवर्ण्य यस्मिम् तत्, नेत्रद्वये श्वेतमण्डलरक्तरेखाणां सयोगतोऽञ्जनकलनावस्थितोः तृतीयनयनेऽप्यञ्जनसंयोगात्कार्ष्ण्यावस्थानाच्चेति भावः । इदमस्मदनुग्रहदृष्टिमत् । तव भवत्या नेत्रत्रितयं नयनत्रयं कर्तृ, उपरतान् प्रलयान्तरमीशाने निलीनान् द्रुहिणहरिरुद्रान् रजःसत्त्वतमोगुणप्रधानान् सृष्ट्यादिकर्तॄन् ब्रह्मविष्णुकालरुद्रान् पुनः भूयोऽपि स्रष्टुं सृष्ट्यादिप्रवर्तनाय सर्जनं कर्तुं रजः सत्त्व तम इत्येतद्गुणाना त्रयं ब्रह्मादिसर्जनसाधनं रक्तश्वेतनीलत्वेन कविसमयप्रसिद्धं बिभ्रदिव भाति प्रकाशते । रक्तश्वेतनीलैर्गुणैरलंकृतं भवन्नेत्रत्रितयं पुनर्ब्रह्मादिसर्जनाय तत्कारणगुणत्रयधारीव भातीत्यर्थः । उत्प्रेक्षालंकारः ॥ १२ ॥

**पवित्रीकर्तुं नः पशुपतिपराधीनहृदये**
**दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।**

**नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं**
**त्रयाणां तीर्थानामुपनयसि संभेदमनघम् ॥ १३ ॥**

लक्ष्मीधरा

एतदेव त्रैवर्ण्यं पुनरुत्प्रेक्षते—**पवित्रीकर्तुमिति** । पवित्रीकर्तुम्; अपवित्रान् पवित्रान् कर्तुं, "अभूततद्भावे संपद्यकर्तरि च्विः" । नः ; अस्मान् , पशुपतिपराधीन-हृदये ; हरायत्तचित्ते ! दयामित्रैः दयार्द्रैः नेत्रैः, अरुणधवलश्यामरुचिभिः प्रत्येक-मिति शेषः । नदः , पुंप्रवाहः, शोणः , हिरण्यवाहः स तु रक्तवर्णः, गङ्गा , भगीरथी श्वेतवर्णा, तपनतनया , कालिन्दी नीलवर्णा इति कविप्रसिद्धिः । इति एवं ध्रुवं सत्यम् , अमुं; परिदृश्यमानं, त्रयाणा तीर्थाना; जलावताराणां, संभेदं; नदीसङ्गमम् , उपनयसि ; संपादयसि, अनघं ; अघापनोदकम् ।

अत्रेत्थं पदयोजना—हे पशुपतिपराधीनहृदये ! दयामित्रैः अरुणधवलच्छाय-रुचिभिः नेत्रैः शोणो नदो गङ्गा तपनतनयेति त्रयाणां तीर्थानाम् अमुम् अनघम् संभेदं नः पवित्रीकर्तुम् उपनयसि ध्रुवम् । भक्तवत्सलत्वाद्देव्या इति भाव । अत्रो-त्प्रेक्षालंकारः ; स्वभावसिद्धस्य नयनगतरेखात्रितयस्य सितासितरक्तवर्णात्मकस्य गङ्गा-यमुनाशोणसंगमत्वेनोत्प्रेक्षणात् ॥ १३ ॥

अरुणामोदिनी

पुनस्तदेवान्यथोत्प्रेक्षते—**पवित्रीकर्तुमिति** । पशुपतिः शिवः तेन पराधीनं हृदयं यस्याः सा शिवायत्तचित्ता पशुपताविवाङ्गतया पशुशब्दवाच्यजनावनपरायणहृदया वेत्य-भिसंधिः । तस्याः संबुद्धिः हे पशुपतिपराधीनहृदये ! नः भक्तजनानस्मान्, पवित्रीकर्तुं शोद्धुमेव ; "कुलिशं भिदुरं पविः" इति कोशात् पवि त्रायत इति पवित्र इन्द्रः तत्स-मानीकर्तु चेत्यभिसंधिः । 'सितासिते सरितो यत्र संगमे', इत्यादि श्रुतेः । अरुणधवल-श्यामरुचिभिः ; रक्तशुभ्रनीलकान्तिकलितैः ; किंच दयामित्रैः कृपावद्भिः नेत्रैर्नयनैः शोण-स्तदाख्यो रक्तवर्णो नदः पुंप्रवाहः । गङ्गा भागीरथी ; श्वेतवर्णा, तपनतनया ; यमुना नीलवर्णेत्येवंरूपाणां त्रयाणां तीर्थाना पुण्यजलानाम् अनघं द्वयम् ; "अनघोऽपापहृद्ययोः" इति धरणिः । अनघे इति पाठे देवी सं* . . . .

* अत्र मातृकाभागस्त्रुटित. ।

[पवित्रीकर्तुमिति । हे पशुपतिपराधीनहृदये ; श्रीपरशिवायत्तचित्ते ! दयामित्रैः ; कारुण्यपूर्णैः, अरुणधवलश्यामरुचिभिः ; अरुणत्वं रक्तराजिषु, धवलत्वम् अपाङ्गभागे, श्यामत्वम् कृष्णमण्डल इति त्रिधा वर्णविन्यासेन शोभमानैः नेत्रैः ; नः, अस्मान्, पवित्रीकर्तुम ; नदः शोणः हिरण्यबाहुश्च, "शोणो हिरण्यबाहुः स्यात्" इत्यमरः। गङ्गा जाह्नवी च, तपनतनया ; कालिन्दी चेति त्रयाणा जगत्प्रसिद्धानां महातीर्थानाम्, समेदम् ; ससर्गम्, अन्योन्यमेलनम् उपनयसि । हे अनघे ! अपापशीले ! त्वच्चरणनिरताना भक्ताना त्वद्व्यतिरेकेण तीर्थोपाश्रयो व्यर्थ एव । यत् त्वदीयावलोकनसपन्नशाभववेध-दीक्षाशुशुक्षणिः तत्क्षणप्लुष्टसमस्तदुरिततूलपुञ्जतया नित्यशुद्धा एव परिपूर्णा अस्ते । तथाहि—

"तीर्थानि तोयपूर्णानि देवान् पाषाणमृन्मयान् ।
योगिनो न प्रपद्यन्ते ह्यात्मध्यानपरायणाः ॥"

इति । "न वारिणा शुद्ध्यति चान्तरात्मा" इति च ॥ १३ ॥]

**निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती**
**तवेत्याहुः सन्तो धरणिधरराजन्यतनये ।**
**त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः**
**परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ १४ ॥**

लक्ष्मीधरा

**निमेषेति** । निमेषो नाम पक्ष्माणा मुकुलीभावः, अत्र उन्मेषो नाम नयने पक्ष्मविकासः, ताभ्यां यथाक्रमं प्रलयं संहारम् उदयम् उद्भवं याति प्राप्नोति जगती तव भवत्याः इति एवम् आहुः ब्रुवते । "ब्रुवः पञ्चानामादितः" इत्यादिना आहादेशः । सन्तः ; सत्पुरुषाः व्यासादयः। दृष्टिसृष्टिवादिमते ज्ञानव्यति-रेकेण ज्ञेयाभावात् निमेषोन्मेषाभ्यामित्युक्तेराञ्जस्यमिति ध्येयम् । धरणिधरराजन्यतनये ! हिमाचलपुत्रिके ! त्वदुन्मेषात् ; तव पक्ष्मस्पन्दात्, जातं ; जगत् भुवनम्, इदम् ; परिदृश्यमानम्, अशेषम् ; कृत्स्नम्, प्रलयतः ; महासंहारात्, परित्रातुं ; रक्षितुं शङ्के, परिहृतनिमेषाः ; तिरस्कृताक्षिस्पन्दाः, तव दृशः नयनानि ।

अत्रेत्थं पदयोजना—धरणिधरराजन्यतनये! तव निमेषोन्मेषाभ्यां जगती प्रलयमुदयं यातीति सन्त आहुः। अतः त्वदुन्मेषात् जातम् अशेषं इदं जगत् प्रलयतः परित्रातुं तत्र दृशः परिहृतनिमेषाः इति शङ्के।

अत्रोत्प्रेक्षालंकारः। देवानामनिमेषत्वं स्वभावप्रसिद्धम्; तच्च जगत्संरक्षणार्थमिति फलत्वेनोत्प्रेक्षणात् फलोत्प्रेक्षा। तत्र निमेषोन्मेषदशायां तौ जगदुत्पत्तिलयाविति देव्याः महिमा अवाङ्मनसगोचर इति वस्तु ध्वन्यते। अतोऽलंकारेण वस्तुध्वनिः॥ १४॥

## अरुणामोदिनी

निमेषेत्यादि। हे धरणिधरराजन्यतनये! शैलराजन्यतनये! निमेषोन्मेषाभ्याम्; तव नयनयोः निमीलनोन्मीलनाभ्याम्, प्रलयं संहारं उदयं सृष्टिं च कर्म, जगत्कर्त्री समस्तभुवनावलिर्याति प्राप्नोति। सन्तः; भूतभविष्यद्वर्तमानविदः, आहुः निगदन्ति। "ब्रुवः पञ्चानामादित आहो ब्रुवः" इत्याहादेशः। यदित्थं वदन्ति तत्प्रायेणासत्यमिति प्रतिपादयति—त्वदिति। त्वदुन्मेषात्; तव लोचनोन्मीलनात्, जातं, लब्धसत्ताकं, जगद्, इदं; शिवादिक्षितिपर्यन्ततत्त्वजालविनिर्मितं भुवनसंस्थानं प्रलयकर्मतः संहारतः सकाशात् परित्रातुं रक्षितुं परिहृतनिमेषाः निमीलनरहिताः तव दृशः इति शङ्के इति वाक्यार्थः कर्म। अस्मिन्नर्थे कामसिद्धिस्तोत्रे भगवतीभक्तिलोलचूडामणिः श्रीवत्सराजोऽप्याह—

"लोकाश्चतुर्दश महेन्द्रमुखाश्च देवाः मूर्तित्रयं मुनिगणाश्च वसिष्ठमुख्याः।
सद्यो भवन्ति न भवन्ति समस्तमूर्तेरुन्मीलनेन तव देवि निमीलनेन॥"

इति। सर्वासामपि देवाङ्गनानामनिमिषलोचनत्वं वर्तते। तद्भगवत्या अपि स्वभावसिद्धं देवजातिप्रसिद्धम्। अनिमिषलोचनत्वमुत्प्रेक्षते कविनेति मन्तव्यम्। भगवत्या लोचनयोरेवायं प्रभावः यत्कार्यकारणपौर्वापर्यव्यवस्थाव्यतिरेकेण चोपादानकारणपूर्वनियमविद्यमानताव्यतिरेकेण च बुद्धिमत्कर्तृवाङ्मनःशरीरचेष्टाविरहेण चानेन मन्त्रतन्त्रसाधितैन्द्रजालकयोगिपुरुषकरतलकलितशुद्धपिञ्छकाभ्रमणमात्रतत्क्षणसंपादितकपटसमुद्रगन्धर्वनगरादिसादृश्येन स्वात्मस्थितमेव विश्वप्रपञ्चं भगवत्या लोचनमेव सृजति रक्षति संहरतीत्यागमप्रसिद्धया स्वभावोक्तिरेवेति मन्तव्या। न हि परमार्थवचनवेलायां कविकल्पितमिथ्यारूपोत्प्रेक्षालंकारसंभव इति॥ १४॥

**तवापर्णे कर्णेजपनयनपैशुन्यचकिता**

**निलीयन्ते तोये नियतमनिमेषाः शफरिकाः ।**

**इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं**

**जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ १९ ॥**

**लक्ष्मीधरा**

**तवेति** । तव; भवत्याः, अपर्णे! पार्वति! कर्णेजपनयनपैशुन्यचकिताः; कर्णेजपे कर्णसमीपं सदागते नयने ताभ्या यत्करिष्यमाणं पैशुन्यं पिशुनभावः मर्मोद्घाटनं, तस्मात् चकिताः, निलीयन्ते; आकारगोपनेन स्थिता इत्यर्थः। तोये, उदके, नियतं; निश्चयः, अनिमेषाः; निमेषरहिताः, शफरिकाः; मीनयोषितः। इयं च; परिदृश्यमाना नेत्रगता, श्रीः; लक्ष्मीः, बद्धच्छदपुटकवाटं; बद्ध संकलितं छदपुटा एव कवाटं यस्य तत्, कवाटसंघटितगृहमिव वर्तत इत्यर्थः। कुवलयम्; इन्दीवरं, जहाति; त्यजति। प्रत्यूषे; उषःकाले। निशि च; रात्रौ च, विघटय्य, प्रविशति संविशति।

अत्रेत्थं पदयोजना—हे अपर्णे! तव कर्णेजपनयनपैशुन्यचकिताः शफरिकाः अनिमेषास्तोये निलीयन्ते नियतम्। किंच इयं च श्रीः बद्धच्छदपुटकवाटं कुवलयं प्रत्यूषे जहाति निशि च तत् विघटय्य प्रविशति।

अयमर्थः—लोके नेत्रसमं वस्तु शफरिका इन्दीवराणीति। एतद्वितयसमं नेत्रमिति च सुप्रसिद्धम्। उभयोः साम्यमत्र कविरुत्प्रेक्षते नेत्रसौभाग्यं शफरिकासु इन्दीवरेषु च वर्तते। तत्सौभाग्यमाहर्तुकामं नेत्रद्वयं तत्र पैशुन्यं करोतीति।

अत्र पूर्वार्धे उत्प्रेक्षालंकारः, शफरिकाणां जलाधिवासः, अनिमेषत्वं च स्वभावसिद्धम्। तदन्यथात्वेनोत्प्रेक्षणात्। द्वितीयार्धे अतिशयोक्तिः। नेत्रलक्ष्म्याः नेत्रं विहाय इन्दीवरेषु भक्त्यतिशयात् रात्रौ तद्रक्षणार्थं तद्गर्भान्तर्वर्तित्वं, दिवा तद्विहाय नेत्रवर्तित्वम् असंभवीति असंबन्धे संबन्धनिबन्धनात्। इन्दीवरस्य रात्रौ विकासः स्वभावसिद्धः, दिवामुकुलीभावश्च। एतद्वयस्य लक्ष्मीकृतत्वासंबन्धेऽपि संबन्धकथनात् अतिशयोक्त्यन्तरम्। उभयोरनुसृष्टिः। अनुसृष्टिलक्षणं पूर्वमेवोक्तम्।*

* ६ श्लोकव्याख्यायाम्।

अत्र इन्दीवरस्य रात्रौ विकासः, नेत्रद्वयस्य दिवा विकासः। अतश्च दिवा लक्ष्मीः नेत्रे वसति। रात्रौ कुवलये। एवं लक्ष्मीः नक्तंदिवमुभयत्रैव चरति नान्यत्रेति। शफरीप्रभृतीनां लोके नेत्रोपमवस्तूना भगवती नेत्रतुल्यता नास्तीति शफरिकाणामुदकमध्यविलीनत्वमेव युक्तमिति काव्यलिङ्गध्वनिरित्यलंकारेणालंकारध्वनिः॥ १५॥

## अरुणामोदिनी

तवेति। हे अपर्णे! अपगतऋणसबन्धे! ऋणशब्देन जगता सृष्टिस्थितिसंहारकर्मस्य आलस्यवशात् यत्किंचित्कर्मसमापनमुच्यते। तन्नास्ति। तद्यथा जगतः कर्तुमुचितम्। तदनवशेषमेव निर्मलतया संपादयसि। कर्णेजपनयनपैशुन्यचकिताः; कर्णेजपयोः कर्ण प्राप्य जपतोः सूचयतोः नयनयोः पैशुन्यात् पिशुनभावात्, हे भगवति! निरुपमलावण्यायाः तव सबन्धयोः आवयोः अनुपमशाखायुक्तयोः शोभाविडम्बिकाः शफरिकाः अस्मद्द्रोहिण्य एताः पश्य। किंच सर्वदा अस्मत्कान्तिषु कमलेषु या श्रीः वर्तते, सा अस्मद्द्रोहिण्यैव तदुभयोः अनयोः त्वदाश्रयादस्मद्विरुद्धयोः त्वयैव दण्डनं क्रियताम्। न किंचिदप्यालस्यमालम्ब्यताम, इत्येवंरूपवचनकलापात्मकात् परद्रोहवचनात्, चकिताः; भीताः, "चक भये" इति धातोर्निष्ठायामीट्। चकिताः सत्यः, अनिमेषाः; निमेषशून्याः भवन्त्यश्च, शफरिकाः; मत्स्यविशेषाः, नियत निश्चयेन तोये निलीयन्ते, जलदुर्गमाश्रयन्ति। महाराजगोचरे पिशुनजनोदिताना सामन्ताना दूरं प्रपलाय्य दुर्गाश्रयणं स्वभावः। किंच इय च श्रीः; कमलकर्णिकासिहासनारोहणं महादेवीमधिरूढा लक्ष्मीरपि त्वन्नयनपैशुन्यात् भीता सती, बद्धच्छदपुटकवाटम्; छदाः पत्राण्येव कवाटम् अरर तद्बृन्दे सघटित दत्तार्गलं यस्य तत्, कुवलयम् रात्रौ स्थित्वा प्रत्यूषसमये जहाति, त्यक्त्वा गच्छति। दिवसे इतस्ततो भ्रमणापदेशेन समयं नीत्वा पुनरपि निशि रात्रौ विघटय्य पूर्वोक्तदलकवाटोद्घाटनं कृत्वा प्रविशति। राजा पराधीनः खलु लोके रात्रौ निभृततया स्वगृहे तिष्ठति। प्रातःकाले कवाटेन गृह मुद्रयित्वा यत्र क्वचिदज्ञातवासाय पलायन्त इति॥ १५॥

**दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा**
**दवीयांसं दीनं स्नपय कृपया मामपि शिवे।**
**अनेनायं धन्यो भवति न च ते हानिरियता**
**वने वा हर्म्ये वा समकरनिपातो हिमकरः॥ १६॥**

## लक्ष्मीधरा

**दृशेति** । दृशा ; कटाक्षदृष्ट्या, द्राघीयस्या ; दीर्घतरया, दरदलितनीलोत्पलरुचा ; दरदलितम् ईषद्विकसितं नीलोत्पलम् इन्दीवरं तस्येव रुचिर्यस्या. तया, दवीयांसं ; दूरवर्तिनम् । दूरशब्दस्य "स्थूलदूर—" इत्यादिना सूत्रेण यणो लोपः, पूर्ववर्णस्य गुणे कृते अवादेशे कृते सिद्धं रूपं दवीयानिति ईयसुन्प्रत्ययान्तम् । दीनं ; दरिद्रम्, स्नपय, स्नपनं कुरु । कृपया, दयया, मामपि, इतरजनसाधारण्यमपिशब्दार्थः । शिवे ! मङ्गलात्मिके ! अनेन एतावन्मात्रेण स्नपनेनापि अयं जनः अहमित्यर्थः । धन्यो भवति; कृतार्थो भवति । न च ते ; तव, हानि. ; द्रव्यनाशः, इयता, साधारणदर्शनमात्रेण । वने वा अरण्ये वा ; हर्म्ये प्रासादे वा, समकरनिपातः ; समं तुल्यं यथा भवति तथा कराणा किरणाना निपातः व्यापनं यस्य सः तथोक्तः, हिमकरः, शीतरश्मिः ।

अत्रेत्थं पदयोजना—हे शिवे ! द्राघीयस्या दरदलितनीलोत्पलरुचा दृशा दवीयांसं दीनं कृपया मामपि स्नपय अयम् अनेन धन्यो भवति । इयता ते हानिर्न च । तथाहि हिमकरः वने वा हर्म्ये वा समकरनिपातो हि । स्वच्छान्तःकरणाना सर्वसाधारण्यं स्वभावसिद्धमिति भावः ।

अर्थान्तरन्यासोऽलंकारः ; सामान्येन विशेषसमर्थनात् । सर्वसाधारण्यदर्शनं सर्वोत्कृष्टत्वे हेतुरिति नात्मीयदर्शनापेक्षा अस्तीति भावः ॥ १६ ॥

## अरुणामोदिनी

**दृशेत्यादि** । हे शिवे ! शिवभक्तजनकल्याणात्मिके ! दरदलितनीलोत्पलरुचा ; ईषद्विकसितेन्दीवरकाननिन्दाकरकान्त्या, द्राघीयस्या ; दीर्घतरया, दीर्घशब्दात् असुनि प्रत्यये, "प्रियस्थिर—" इत्यादिना द्राघादेशः । "उगितश्च" इति ङीप् । द्राघीयसी, एवंभूतया दृशा, दवीयासम् ; अत्यन्तदूरवर्तिनम् बहुतरतृष्णाकार्पण्यवशात् सर्वतो याञ्चापरायणम्, दीनम् ; "दीङ् क्षये" इति धातोः निष्ठात्वेन दीन इति रूपम् । मां कृपाया ; करणभूतया, स्नपय प्लावय, स्नातेः णिचि प्रत्यये पुगागमे मित्सञ्ज्ञाया "मिता ह्रस्वः" इति ह्रस्वः । तम् मामपि, अपिः समुच्चये । न च ये गुणवन्तः ते भक्तिमन्तः कृतः, त्वच्चरणपूजाश्च तेषा दयया रक्षणं करोत्येव । तव तद्रक्षणौदासीन्येऽपि कृतसत्कर्मफलावश्यभावनियमात् तत्तत्कर्ममाहात्म्यप्रेरितया त्वया तेषा परिपालनं कर्तव्यमेव, नाहं तादृशगुणेन भक्तः, न च नापरः । केवलबालकवत् अम्बाम्बेति

दीनाक्रन्दनमात्रपरायणः तस्य मम रक्षणमेव अद्भुतस्वभावं कीर्तये, धर्माय च रक्ष, स कीर्तिधर्मार्थं मामपि रक्षेत्यर्थसङ्गतिरवगन्तव्या। यन्मम दीनस्य परिपालनमस्ति, तेन अनेनायं धन्यो भवति। एतच्छब्देन आत्मानमेव घट्टकुड्यवत् अप्रयोजकतया चेतनतया चोत्पन्नं परामृश्यते। अहप्रयोगस्थाने इदंशब्दादयः दैन्याद्यर्थान्तरसहकृतः सन्तो विशिष्टमहमर्थं प्रतिपादयन्ति। अनेन कर्मणा ममापि धन्यता, तवापि हानिरियता नास्ति। स्वेच्छामात्रसाध्यतया मद्रक्षणस्य तव लीलामात्रमेवेति भावः। गुणवत्पुरुषाभ्युपपत्तावेव स्वामिजनस्य रिरिक्षषा सार्थेति चेत्; नाय नियमः गुणवान् रक्ष्यः, निर्गुणस्त्याज्य इति। तथा च दृष्ट वने वा हर्म्ये वा नायकनायिकासरसानन्दसंभोगयोग्यप्रदेशेऽपि वा हिमकरः चन्द्रमाः युगपदेव विशेषेण समकरनिपातो भवति। समानकिरणप्रचारो भवति। अनायाससाध्ये बहुतरकीर्तिधर्मोपजनकेलिना अनाथविपन्नसमुद्धरणपण्डितेऽनवधिककारुणिकतोपलम्बसभाविते रक्षणात्मके सत्कर्मणि निहितावलम्बनमुचितमिति भावः ॥ १६ ॥

**अरालं ते पालीयुगलमगराजन्यतनये**
**न केषामाधत्ते[1] कुसुमशरकोदण्डकुतुकम्।**
**तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलस-**
**न्नपाङ्गव्यासङ्गो दिशति शरसंधानधिषणाम् ॥ १७ ॥**

लक्ष्मीधरा

**अरालमिति।** अरालं; कुटिलं, ते पालीयुगलं; कर्णयुगलनयनयुगलयोः मध्यम्। अगराजन्यतनये! नगेन्द्रतनये! न केषामाधत्ते; सर्वेषां करोत्येव। कुसुमशरकोदण्डकुतुकम्; मन्मथचापसौभाग्यं, तिरश्चीनः; तिर्यक्प्रसारितः, यत्र, पालीयुगले, श्रवणपथमुल्लङ्घ्य; कर्णान्तिकं प्राप्य, विलसन्, स्फुरन्, अपाङ्गव्यासङ्गः, अपाङ्गस्य कटाक्षस्य व्यासङ्गः दैर्घ्यं करोति, शरसंधानधिषणा; शरसंधानस्य बाणसंयोजनस्य धिषणां बुद्धिं तद्भ्रान्तिं संहितशरधिषणामिति यावत्।

अत्रेत्थं पदयोजना—हे अगराजन्यतनये! ते पालीयुगलमरालं कुसुमशरकोदण्डकुतुकं केषां नाधत्ते। यद्यस्मात् यत्र तिरश्चीनः विलसन् अपाङ्गव्यासङ्गः श्रवणपथमुल्लङ्घ्य शरसंधानधिषणां दिशति।

[1] दत्ते इत्यरुणामोदिनी।

अत्र भ्रान्तिमदलंकारः; अपाङ्गे संहितशरभ्रान्तेरुत्थानात्। पालीयुगले कुसुमशरकोदण्डबुद्धिः निश्चयात्मिका संशयपूर्विकेति संदेहालंकार एव। अनयोरङ्गाङ्गिभावेन संकरः ॥ १७ ॥

### अरुणामोदिनी

अरालमिति। हे अगराजन्यतनये! न गच्छतीत्यगः पर्वतः तद्राजन्यः श्रेष्ठः हिमवान् तत्तनये कुलप्रदीपिके! अरालम्; वक्राकारम्, पालीयुगलम्; श्रवणाभरणविशेषयुग्मम्, "पाली कर्णाङ्गे कर्णकोटिविभूषणे" इति विश्वप्रकाशः। कुसुमशरकोदण्डकुतुकम्; कुसुशरस्य कन्दर्पस्य कोदण्डं विशिखपर्यायः तानि पुष्पाणि सर्वाणि स्मरनामधेयानि, कोदण्डस्य कुतुकम् कोदण्डमेवैतदिति कुतूहलाभिनिविष्टमभिप्रायं केषा पुरुषाणां नादत्ते न संपादयति। अपि तु सवेषामित्यर्थः। यदिदं पालीयुगलम् अनङ्गधनुः स्यात् तत्र शरसधानं कथमित्याशङ्कायामाह—तिरश्चीन इति। यत्र पालीयुगले तिरश्चीनः तिर्यक्तया पतनं श्रवणपथमुल्लङ्घ्य कर्णप्रान्तं लङ्घयित्वा विलसन् देदीप्यमानोऽपाङ्गव्यासङ्गः कटाक्षविक्षेपचातुरीविशेषः शरसंधानधिषणां बाणसंयोजनबुद्धिं दिशति संपादयति दत्ते पालीयुगलमिति पूर्वेण संबन्धः ॥ १७ ॥

**स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं**
**चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम्।**
**यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं**
**महावीरो मारः प्रमथपतये सज्जितवते ॥ १८ ॥**

### लक्ष्मीधरा

स्फुरदिति। स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं; स्फुरन्तौ च तौ गण्डाभोगौ च गण्डस्थले, दर्पणवन्निर्मलावित्यर्थः। तत्र प्रतिफलितं प्रतिबिम्बितं ताटङ्कयुगलं यस्य सः तं चतुश्चक्रं; चत्वारि चक्राणि रथचरणानि यस्य तं चतुश्चक्रं, मन्ये शङ्के। तव; भवत्या, मुखम्; आस्यम्, इदं; हृदयकमले परिदृश्यमानं, मन्मथरथं; मदनस्य स्यन्दनं, यं रथमारुह्य अधिष्ठाय, द्रुह्यति; अपराध्यति विध्यतीति यावत्।

अवनिरथं; भूमिरथम्, अर्केन्दुचरणं; अर्केन्दू सूर्यचन्द्रौ द्वावेव चरणौ यस्य सः, महावीरः; चतुश्चक्ररथारोहणमहिम्ना अप्रतिहतप्रतापः, मारः; मन्मथः, प्रमथपतये; त्रिपुरान्तकाय, सज्जितवते; सज्जं कुर्वते संनद्धं कुर्वते इत्यर्थः।

अत्रेत्थं पदयोजना—हे भगवति! तव इदं मुखं स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं चतुश्चक्रं मन्मथरथं मन्ये। यमारुह्य मारः महावीरः सन् अवनिरथमर्केन्दुचरणं सज्जितवते प्रमथपतये द्रुह्यति। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति चतुर्थी।

अत्र पूर्वार्धे उत्प्रेक्षालंकारः; भगवत्याः मुखस्य रथत्वेनोत्प्रेक्षणात्। द्वितीयार्धे आरोहणस्य महावीरत्वसंपादकत्वकथनात् पदार्थहेतुकं काव्यलिङ्गमलंकारः। परमेश्वरस्य मन्मथेन सार्धं युद्धसंनाहसंबन्धेऽपि संबन्धकथनादतिशयोक्तिः। काव्यलिङ्गातिशयोक्त्योरङ्गाङ्गिभावेन संकरः। उत्प्रेक्षायास्तु काव्यलिङ्गं प्रत्यनुप्राणकतैव, न संसृष्टिः। नापि संकर इति ध्येयम्। पृथक्स्थित्या उपकारकमनुप्राणकम्। अपृथक्स्थित्या प्रयोजकमनुसर्जनम्। पृथक्स्थित्या प्रयोजकमङ्गम्। एतद्विलक्षणं संसृष्टिरित्यालंकारिकमतरहस्यम्। एतच्च पूर्वमुक्तमपि स्पष्टार्थं पुनः प्रतिपादितमिति ॥ १८ ॥

## अरुणामोदिनी

स्फुरदिति। स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलम्; कर्णपाशमण्डलाकाराभरणविशेषयुग्मं यत्र तत्तथोक्तम्। मुखस्य विशेषणम्। बिम्बयुगलस्य; प्रतिबिम्बयुगले जाते चतुःसंख्याकान् चतुर्भिः चक्रैः वहनीयम्, मन्मथरथमेव कन्दर्पस्यन्दनमेव इदं तव मुख शङ्के। तदेव विशिनष्टि—य तव मुखलक्षणं रथमारुह्य महावीरो मारः कर्ता, अर्केन्दुसदृशं भास्करनिशाकरभास्वरचक्रोज्ज्वलम् अवनिरथम् भूमिमारुह्य स्वस्वमात्मानं जितवते तिरस्कृतवते प्रमथपतये महादेवाय द्रुह्यति पराभव करोति। द्विचक्रस्य रथस्य गमनवैकल्यसंभवात् अतोऽधिकता चतुश्चक्रसभवे तद्रथिनं प्रति तदूनरथिनः पराजयो युक्तः। आरुह्येति दीपकालंकारः। यमारुह्येति महादेवेन सबन्धः। सबन्धद्वयमपि दीपकताशब्दस्य। यथा 'जामात्रर्थो दीपः सर्ववेश्माभिज्वलयति' इति कार्यद्वयसाधनद्वारा अर्थद्वयोद्दीपनसंभवाद्दीपकत्वम्। अत्र श्लोके महादेवस्योपरि मन्मथजयसपत्त्या महादेवस्य काममोहितचित्तवृत्तितया तन्मोहनैकरसिकस्य भगवतीवदनारविन्दस्य समधिकशृङ्गाररसार्द्रभावे संपन्ने महादेवलावण्यकान्तिविशिष्टं लोकोत्तरत्वमुट्टङ्कितमिति भावः ॥ १८ ॥

**सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः**
**पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम्[1] ।**
**चमत्कारश्लाघाचलितशिरसः कुण्डलगणो**
**झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ १९ ॥**

### लक्ष्मीधरा

**सरस्वत्या** इति । सरस्वत्या ; भारत्या, सूक्तीः, मधुरवचांसि, अमृतलहरीकौशलहरीः; अमृतलहर्याः सुधाप्रवाहोत्सेकस्य कौशलं सौभाग्यं हरन्तीति ताः । हरिशब्दः औणादिको निप्रत्ययान्तः, "कृतिकारादक्तिनो वा ङीष् वक्तव्यः" इति ङीष् । पिबन्त्याः, धयन्त्याः, शर्वाणि ! शर्वस्य परमेश्वरस्य पत्नि ! श्रवणचुलुकाभ्यां ; चुलुक प्रसृत्यर्धं श्रवणे श्रोत्रे एव चुलुके ताभ्याम् अविरलं यथा भवति तथा, सावधानेनेत्यर्थः । चमत्कारश्लाघाचलितशिरसः; चमदित्यव्ययमाश्चर्यानुकरणवाचि । कारशब्दः स्वरूपपरः । यद्वा—सुखदुःखोद्भूतानन्दैः हठोत्थितचित्तविक्रियो चमत्कारः ससीत्कारशरीरोल्लासनादिकृत् । चमत्कारश्लाघासु आश्चर्यानुकरणसंदोहेषु चलितं शिरः यस्याः, तस्याः कुण्डलगणः; कर्णाभरणसमूहः, झणत्कारैः ; झणदित्यव्ययं भूषणरवानुकरणे । अत्रापि कारशब्दः स्वरूपवाची । झणत्कारैः तारैः अतिबहुलैः उच्चतरैः प्रतिवचनं प्रतिशब्दम् अनुमोदवचनम् आचष्ट इव ते ।

अत्रेत्थं पदयोजना—हे शर्वाणि ! ते अमृतलहरीकौशलहरीः सूक्तीः श्रवणचुलुकाभ्यामविरलं पिबन्त्याः चमत्कारश्लाघाचलितशिरसः सरस्वत्याः कुण्डलगणः तारैः झणत्कारैः प्रतिवचनमाचष्ट इव ।

अत्र उत्तरार्धे उत्प्रेक्षालंकारः, झणत्काराणां प्रतिवचनत्वेन संभावनात् । पूर्वार्धे अतिशयोक्त्यलंकारः ; सरस्वत्याः शिरःकम्पनसंबन्धाभावेऽपि संबन्धोक्तेरसंबन्धे संबन्धनिबन्धनात् । उभयोरङ्गाङ्गिभावेन संकरः ॥ १९ ॥

### अरुणामोदिनी

सरस्वत्या इति । हे शर्वाणि ! "इन्द्रवरुणभवशर्वरुद्रहिम—" इत्यादिना आनुक्, ङीप्प्रत्ययश्च । शर्वदयिते ! अमृतलहरीकौशलहरीः अमृतलहरीणां सुधाप्रवाहाणाम्;

[1] अविरतम् इत्यरुणामोदिनी ।

"तरङ्गभङ्गवीक्ष्यादिलहरी वीचिकोर्मयः" इति विश्वप्रकाशः। कौशलं माधुर्यं माधुर्यात्मकं सामर्थ्यविशेषणं हर विदूरीकुर्वन्त इति हरस्याधिक्येन तत्रान्यूनता सपादयित्रीः सरस्वत्या वाग्देवतायाः सूक्तीः सुवचनविन्यासमधुरस्थिता गीतोक्तिः, श्रवणचुलुकाभ्याम्; कर्णरूपकरतलाभ्याम्, करतलेनैव खलु पानीयादिपेय पीयत इति करतलसाधर्म्यं श्रवणस्य, तेन च सरस्वतीसूक्तीनाम् अमृतरसात्मकत्वं ध्वन्यते। पिबन्त्याः आस्वादयन्त्याः तदर्थविशेषचमत्कारमनुभवन्त्याः, अत एव हेतोः अविरत; (संतत) चमत्कारश्लाघाचलितशिरसः कुण्डलगणः; चमत्कारो नाम श्रूयमाणगीतशब्दादिजनितो माधुर्यातिशयः, तस्य श्लाघा उपलालनम्, तेन चलितशिरसः कम्पितमूर्ध्नः, तव कुण्डलगणः सूक्ष्मकुण्डलसमूहात्मको भूषणविशेषः कर्ता, तारैः; अत्युच्चध्वनिविशेषैः, झणत्कारैः; स्वकीयमणिगणसवट्टजनितसवट्टनैः, प्रतिवचनम् आचष्ट इव; प्रत्युत्तरं दत्त इव, प्रथमप्रश्नवचनानन्तरसदुत्तरप्रदानसमानयोरेव शोभत इति सूचित भवति। कुतः सरस्वतीसूक्तेः कमलमधुरत्वात् कुण्डलगणझणत्कृतीनामपि माधुर्यं सति तयोः सवादार्थसाम्यमस्तीति भावः॥ १९॥

**असौ नासावंशस्तुहिनगिरिवंशध्वजपटि**
**त्वदीयो नेदीयः फलतु फलमस्माकमुचितम्।**
**वहत्यन्तर्मुक्ताः शिशिरकरनिश्वासगलितं[1]**
**समृद्ध्या यत्तासां बहिरपि च मुक्तामणिधरः॥ २०॥**

लक्ष्मीधरा

**असाविति।** असौ; परिदृश्यमानः, नासावंशः; नासा नासिका वंशः वंशदण्डः रूपकमेतत्। तुहिनगिरिवंशध्वजपटि! तुहिनगिरेः हिमाचलस्य वंशस्य अन्वयस्य ध्वजपटि पताके! त्वदीयः; भवदीयः, नेदीयः, संनिकृष्टतरं, फलतु निष्पादयतु, फलम्; इष्टार्थम्, अस्माकं, मत्संबन्धिना मम चेत्यर्थः। उचितं; क्रियाविशेषणमेतत्, यथेप्सितं वहति धारयति अन्तः अभ्यन्तरे मुक्ताः मुक्तामणीन्, शिशिरकरनिश्वासगलितं; शिशिरकरः चन्द्रः तस्य निश्वासो वामनाडीमार्गवायुः तेन गलितं स्रुतं, समृद्ध्या; आधिक्येन यत् यस्मात्कारणात् तासां मुक्तानां बहिरपि च बाह्यप्रदेशेऽपि नासिकाग्रवामभागेऽपीत्यर्थः। नासिकाकाराकारितो वंशदण्डः मुक्तामणिधरः मुक्तामणिं धृतवान्। 'मुक्तामणिमधात्' इति सम्यक्पाठः।

[1] जनिताः इत्यरुणामोदिनी।

अत्रेत्थं पदयोजना—हे तुहिनगिरिवंशध्वजपटि! त्वदीयोऽसौ नासावंशः अस्माकमुचितं नेदीयः फलं फलतु। स अन्तः मुक्ताः वहति। यद्यस्मात्कारणात् तासां समृद्ध्या शिशिरकरनिश्वासगलितं बहिरपि च मुक्तामणिधरः।

अत्र नासिकायाः वंशत्वारोपणात् रूपकम्। वंशत्वसाधकप्रतिपादकमुत्तरार्धम्। वंशगर्भे मौक्तिकाः उद्भवन्तीति लोकशास्त्रमर्यादा। अतो नासिकावंशदण्डेऽपि अभ्यन्तरे मौक्तिकान्युद्भूतानि वर्तन्ते। नो चेन्नासादण्डवंशस्य बहिः मुक्तामणिधरत्वं कथं संघटत इत्यर्थापत्त्या वंशदण्डाकारो नासिकायाः समर्थित इति रूपकमेव सम्यक् ॥ २० ॥

## अरुणामोदिनी

नासां वर्णयति—असाविति। हे तुहिनगिरिवंशध्वजपटि! तुहिनगिरिवंशस्य हिमवदन्वयस्य, ध्वजपटी कीर्तिप्रख्यापनमङ्गलवैजयन्ती चीनांशुकपट्टिके! असौ; अविद्यमानसौन्दर्योपमितिः अतिप्रसिद्धः, तव नासावंशः; कोमलवंशरूपेण ऋजुरमणीयतया ललाटोलम्बितरूपत्वात् वंशसाधर्म्यम्, अस्माकं नेदीयः; अन्तिकवर्ति उचितम्। तद्भक्तेः मम च भक्तस्य समुचित फलं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थलाभरूपं प्रयोजनं फलयितु सपादयितु, वंशकाण्डस्य फलत्वनियमात् कविसमयसिद्धिरस्त्येव वंशकाण्डान्मुक्तोत्पत्तिः। तादृशदेशकालविशेषसंसिद्धिसंभव इति तं प्रमाणीकुर्वन् कविरपि वंशस्तम्भान्मुक्ताप्रसूतिमाचष्टे। तव नासावंशे मुक्ताप्रसूतिरस्तीति प्रत्यक्षमेवात्र प्रमाणम्। शिशिरतरनिश्वासजनिताः; शिशिरतरेण शीतलेन निश्वासेन श्वसितपवनेन जनिताः सपादिताः तद्रूपिणीरभ्यन्तरमुक्ताः वहन् अयं नासावंशः तासामभ्यन्तरे वर्तमानाना निश्वासरूपिणीना देवतानुभावसपन्नमुक्ताभावानां समृद्ध्या यो नासावंशः, बहिरपि; बहिर्देशेऽपि नासाग्रमौक्तिकव्याजेन मुक्तामणिधरो मुक्तामणि प्रसूतमङ्गं धारयन्निव वर्तते। स नासावंशोऽस्माकं फलमुचितं ददात्विति पूर्वेण सबन्धः ॥ २० ॥

**प्रकृत्यारक्तायास्तव सुदति दन्तच्छदरुचेः**
**प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता।**
**न बिम्बं [1]तद्बिम्बप्रतिफलनरागादरुणितं**
**तुलामध्यारोढुं कथमिव विलज्जेत कलया ॥ २१ ॥**

[1] त्वद्बिम्ब० इत्यरुणामोदिनी.

## लक्ष्मीधरा

**प्रकृत्येति**। प्रकृत्या स्वभावेन आरक्तायाः आताम्रायाः, तव सुदति; शोभनाः दन्ताः यस्याः तस्याः संबुद्धिः। दन्तच्छदरुचेः; दन्तच्छदयोरोष्ठयोः रुचेः सौभाग्यस्य प्रवक्ष्ये प्रकर्षेण कथये। सादृश्यं; सदृशस्य भावः सादृश्यम्। जनयतु उत्पादयतु। आशंसायां लोट्। विद्रुमफलं यदि स्यात् तदा सदृशवस्तुसद्भावः, न तु विद्रुममात्रं सदृशमिति। फलं पक्वफलम्। पीतपर्णाभ्यः लताभ्यः उत्पन्नं फलमतिरिक्तम्, रक्तलतोत्पन्नस्य रक्तिमा किमु वक्तव्य इति तदेव सदृशमिति तात्पर्यम्। विद्रुमलता; प्रवाललतिका, न बिम्बं बिम्बफलं तद्बिम्बप्रतिफलनरागात् तयोः दन्तच्छदयोः बिम्बस्य प्रतिफलनं प्रतिबिम्बनं तेन रागः रक्तिमा। तस्माद्बिम्बफलमिति व्यवहारः अधरबिम्बप्रतिबिम्बप्रसादासादितः। अन्यथा तस्य बिम्बव्यवहारो न स्यात्। यथा स्फटिकादौ जपाकुसुमादेः प्रतिबिम्बवशादेव स्फटिकादीनां रक्तता, एवं बिम्बफलस्यापीति। तद्बिम्बप्रतिफलनरागात् अरुणितं तुलामध्यारोढुं तुलायां साम्यकथायां स्थातुं कथमिव। इवेति वाक्यालंकारे। विलज्जेत व्रीडेत कलया लेशेन।

अत्रेत्थं पदयोजना—हे सुदति! तव प्रकृत्या आरक्तायाः दन्तच्छदरुचेः सादृश्यं प्रवक्ष्ये। विद्रुमलता फलं जनयतु। बिम्बं पुनः तद्बिम्बप्रतिफलनरागादरुणितं कलयापि तुलामध्यारोढुं कथमिव न विलज्जेत। लज्जाधातुरात्मनेपदी।

अत्रातिशयोक्तिरलंकारः; यद्यर्थोक्तौ कल्पनात्। द्वितीयार्धे असंबन्धे संबन्धनिबन्धनातिशयोक्तिः। बिम्बप्रतिफलनसंबन्धेऽपि संबन्धकथनेनाभेदकथनात्। उभयोः संसृष्टिः ॥ २१ ॥

## अरुणामोदिनी

दन्तच्छदं स्तौति—**प्रकृत्येति**। प्रकृत्या स्वभावतः, रक्तायाः अरुणायाः; न त्वारोपितरक्तिमावत्याः, "प्रकृत्यादिभ्य उपसंख्यानम्" इति। तया तव भवत्याः दन्तच्छदरुचेः अधरशोभायाः सादृश्यं सारूप्यम् उपमा प्रवक्ष्ये वदितुं शक्नोमीत्यर्थः। कथं चेत्? . . . . . विद्रुमलता रक्तरूपा प्रवालवल्लीफलं स्वानुरूपं रक्तमेव फलं जनयत् उत्पादयत्, आशंसायां लोट्। प्रवाललतायां स्वसदृशफलोत्पत्तिर्भवेच्चेत्; तदा रक्तवर्णभवदधरोष्ठस्य साम्यं वदामीत्यतिशयोक्तिविशेषोऽलंकारः। न च वाच्यम्, एवं बिम्ब-

फलस्य उपमानीकरणार्हस्य विद्यमानत्वादित्यत्राह—तव भवत्या बिम्बस्य रक्तवर्णस्य शरीरबिम्बस्य यत्प्रतिफलनं सङ्क्रमणम्, तस्माद्यो रागः रक्तिमा तेन अरुणितं रक्तीकृतम्, शोणवर्णीकृतमित्यर्थः ।

"यानि सौम्यानि शोणानि शृङ्गाररसभाञ्जि च ।
तान्याहुः शक्तिपातेन संपन्नानीति निश्चयः ॥"

इति वचनादिति भावः । दृग्बिम्बे इति पाठे दृग्बिम्बस्य नेत्रीभूतसूर्यबिम्बस्य प्रतिफलनेन पाचनेन यो रागः, तस्मात् अरुणिताशलाभावस्थायां रक्तिमाभावादिति भावः । तद्बिम्बे इति पाठे बिम्बं बिम्बकाफलं प्रतिफलनरागात् अरुणित रक्तीकृतम् । अत एव बिम्बप्रथास्येति हृदयम् । तत्सादृश्य नार्हतीत्यर्थः । देवीशरबिम्बादनन्यत्वादिति भावः । बिम्बसादृश्यं नार्हति । यतः त्वद्बिम्बप्रतिफलनरागादरुणितमिति योजना । अत एव तस्या वानेन साम्याकाङ्क्षणमप्यसंभावितमित्याह—तुलामिति । अतो बिम्बे सर्वासा नारीणामधरसाम्येन कविभिर्वर्ण्यमानमुपमानीभावगर्वितं चेत्यर्थः । कथमिव न लज्जेत? कुतो वा न व्रीडेत्, अत्यल्पस्तु तुलामवाप्तुमुत्कटेन . . . णो भवतीति भावः । अत्र बिम्बे रागारुणितत्वोत्प्रेक्षा न लज्जेतेत्यतिशयोक्तिभ्या देव्यधरोष्ठस्य निरुपमतासिद्धेरनन्वयो व्यज्यत इत्यलंकारेणालंकारध्वनिः* ॥ २१ ॥

---

* हे परमेश्वरि! प्रकृत्या स्वभावतः रक्ताया अरुणवर्णाया. दन्तच्छदरुचे. दन्तच्छदस्य अधरस्य रुचेः शोभायाः सादृश्यमुपमानम् । हे सुदति! तदा प्रवक्ष्ये निवेदयिष्यामि । कदा विद्रुमलताफलं जनयतु । विद्रुमस्य स्वभावतो रक्तस्य यदि फलं जनन भविष्यति । तत्रापि परिपाकेन अतिशयितपाटलकान्तिर्भविष्यति । तदेवोपमान वक्तुं सुकरम् । नान्यथेत्यर्थ. । मध्ये शङ्का । ननु सर्वस्त्रीणामधरकान्तेरुपमास्थानम् अतिमृदुलस्पर्शमत्यरुणिमसंपदस्थानभूतमखिलेभ्य. फलेभ्योऽप्यतिप्रेक्षणीयकान्तिभरितं बिम्बफल वर्तते खलु । तेन समं कथमम्बिकाधरोपमानसिद्धिर्न स्यात् । किमर्थं वा अविद्यमानफलोत्पत्तिर्विद्रुम उपमितिद्वारा अभूतपूर्वोपमाश्रयणकार्पण्यवैशसमङ्गीक्रियत इत्याशङ्कायामाह—न बिम्बमिति । बिम्ब तावदुपमास्पद न भवतीत्यर्थ. । कुत इत्याह—त्वद्बिम्बप्रतिफलनलाभात् अरुणितम्, तव बिम्बस्य प्रतिफलनलाभात् संक्रान्तिलाभात् अरुणितम् । अत्र प्रतिफलन नाम शक्तिपातः खलु सर्वव्यापिन्या पराशक्तेः किरणकदम्बकाना तत्तत्पदार्थेषु स्फुरणात्मकं प्रतीयते । यावन्त्येव रक्तद्रव्याणि इमानि प्रेक्षणीयानि भवन्ति, तानि सर्वाण्यपि जगद्व्याप्तमूर्तेः श्रीश्रीललितामहाभट्टारिकायाः सर्वतः प्रसरतामरुणिमस्रोतसा प्रतिबिम्बभूतान्येवेत्यागमः । पाटल. खलु वर्ण. प्रथमोत्पन्नत्वात् अक्षिरञ्जनकारणत्वात् रज सत्त्वमुख्यतयोक्तं भगवत्या श्रुत्या—"अजामेका लोहितशुक्लकृष्णाम्" इति, "रक्तशुक्लपदन्द्वम्" इति च वेदागमयो. प्रथमवर्णनीयत्व पाटलवर्णस्य, आगमश्च—

**स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां**
**चकोराणामासीदतिरसतया चञ्चुजडिमा ।**
**अतस्ते शीतांशोरमृतलहरीमाम्लरुचयः**
**पिबन्ति स्वच्छन्दं निशिनिशि भृशं कांजिकधिया ॥२२॥**

लक्ष्मीधरा

**स्मितेति ।** स्मितज्योत्स्नाजालं; स्मितमीषद्धसितमेव ज्योत्स्ना तस्याः जालं वितानं, तव वदनचन्द्रस्य ; वदनमेव चन्द्रः तस्य पिबतां आस्वादयतां चकोराणां पक्षिविशेषाणाम् आसीत् । अतिरसतया ; अतिमाधुर्यात्, चञ्चुजडिमा ; जिह्वाजाड्यम् । अतः कारणात् ते चकोराः, शीतांशोः ; चन्द्रस्य, अमृतलहरीम् ; अमृतस्य सुधाया उत्सेकं ज्योत्स्नामृतमित्यर्थः । आम्लरुचयः, आम्ले अम्लरसे रुचिः वाञ्छा येषां ते आम्लरुचयः, पिबन्ति ; भक्षयन्ति स्वच्छन्दं यथेच्छं निशिनिशि प्रतिनिशं ज्योत्स्नास्विति शेष. । भृशम् अत्यर्थं कांजिकधिया आरनालभ्रान्त्या ।

अत्रेत्थं पदयोजना—हे भगवति! तव वदनचन्द्रस्य स्मितज्योत्स्नाजालं पिबतां चकोराणाम् अतिरसतया चञ्चुजडिमा आसीत् । अतस्ते आम्लरुचयः शीतांशोरमृतलहरीं कांजिकधिया स्वच्छन्दं निशिनिशि भृशं पिबन्ति ।

अत्रातिशयोक्तिरलंकारः ; चञ्चुजडिमनिबन्धनज्योत्स्नापानासंबन्धेऽपि तत्संबन्धकथनात् अतिमधुरस्तन्यपानप्रसक्तजिह्वाजाड्यनिबन्धनाम्लपिपासुभिः बालकैरभेदाध्यवसानस्य प्रतीतेः ॥ २२ ॥

---

"यानि सौम्यानि शोणानि शृङ्गाररसभाञ्जि च ।
तान्यम्बाशक्तिपातेन सपन्नानीति निश्चय ।"

इति । प्रवालेषु रक्तिमा रत्नेषु कुसुम्भेषु कुङ्कुमेषु कमलेषु बालादित्येषु तटित्सु वह्निशिखासु सिन्दूरेष्वन्येष्वप्येतादृशेषु माङ्गलिकसौन्दर्येषु मञ्जुलाकारेषु भगवत्या अम्बाप्रतिफलनशक्तिपात इति सकलागमेषु निश्चितोऽर्थः । अत एव त्वच्छरीरकिरणसंपन्नशक्तिपातमात्रपरिपालनकान्तिना बिम्बेनापि तवाधरस्य तुलासिद्धिर्नास्त्येव । तत्कुतः त्वच्छक्तिपातसंपन्नसौन्दर्यसपन्नं त्वत्तो लब्धजीवित बिम्बफलं पुनः त्वदधरकान्त्या सहोपमानसिद्धिसहचरीं स्वार्थी कर्तुमत एव तद्द्वारा तुलामध्यारोढुं कलयापि लेशांशसृष्टिकयापि कथ न लज्जेत । अपि तु लज्जितैवेत्यर्थः । अत एव त्वदधरबिम्बमतुलमेव संपन्नमिति भावः ॥

## अरुणामोदिनी

स्मितं वर्णयति—स्मितेति । हे देवि ! तव ; भवत्याः, वदनचन्द्रस्य ; मुखेन्दोः सबन्धि, स्मितज्योत्स्नाजालम् ; दरहासकौमुदीगणम्, जाल जलानां समूह इति व्युत्पत्त्या अमृतमयजलराशि चेति ध्वनिः । पिबता ; पानं विदधता, चकोराणा ; चान्द्रिकापायिपक्षिविशेषाणाम्, "चकोरश्चन्द्रिकापायी" इत्यमरः । अतिरसतया ; अतिमाधुर्येण, "चञ्चुस्त्रोटिरुभे स्त्रियाम्" इत्यमरः । चञ्चुषु त्रोटिषु जडिमा जाड्यम् अतिमधुरास्वादजन्या रुचिः आसीत् अभूत् । किं दिवेति शेषः । यतश्चन्द्रिकापानरसिकानां चकोराणामतिमधुराक्षीणशोभवन्मुखेन्दुज्योत्स्नामृतपानेन मुखस्य रुचिरभूत् किम् ? अधिमधुरपायिनो मुखजाड्यानुभवदर्शनादिति भावः । अत्र वदनचन्द्रेत्यादिरूपकसंबन्धकथनातिशयोक्तिभ्यामनुप्राणिता चकोरचञ्चुजडिमाभावनोत्प्रेक्षा गम्या । कुत एतत्तर्क्यत इत्यत्राह—अत उक्ताद्धेतोरेते चकोराः, आम्लरुचयः अरुचिनिवृत्त्यर्थमाकाङ्क्षाः सन्तः शीतांशोः अमृतांशोः अमृतलहरीम् सुधोर्मिकां कांजिकधिया . . . मधुरमुखपीयूषमयूखमाधुर्यं विहाय चन्द्रचन्द्रिकास्वादनलाभः कथमेषा प्रातरा . . . . . . . पूर्वोत्प्रेक्षानुप्राणितोऽयं चन्द्रिकाया काञ्जिकाधीनिबन्धनो भ्रान्तिमदलंकारः । तेन च देवीवदनचन्द्र . . . . . . तिवत् प्रसिद्धचन्द्रात् अत्यौत्कट्यं वस्तु व्यज्यत इत्यलंकारेण वस्तुध्वनिः ॥ २२ ॥

**अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजपा[1]**
**जपापुष्पच्छाया तव जननि जिह्वा जयति सा ।**
**यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी**
**सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा ॥ २३ ॥**

## लक्ष्मीधरा

**अविश्रान्तमिति ।** अविश्रान्तम् ; अनारतम्, पत्युः ; सदाशिवस्य, गुणगणकथाम्रेडनजपा ; गुणानां त्रिपुरविजयादीनां गणः समूहः, तस्य कथा वृत्तान्तः, तस्य आम्रेडनं द्विस्त्रिरुक्तिः, तदेव जपो यस्याः सा, अनन्यमनस्केत्यर्थः । जपापुष्पच्छाया ;

[1] जडा इत्यरुणामोदिनी.

बिधिं वेदार्थं जानातीति विधिज्ञा सर्वज्ञेत्यर्थः। यद्वा— बेदार्थानुष्ठात्री ; अत एव पत्युः नमस्कारः प्रतिदिनं वैध इति कृतः, न तु तस्याधिक्यानुरोधादिति नर्मवचनम्। तस्याः संबुद्धिः। जानुभ्यां विबुधकरिकुम्भद्वयं ; दिग्दन्तिकुम्भस्थलद्वितयम्, असि ; भवसि।

अत्रेत्थं पदयोजना—हे विधिज्ञे! गिरिसुते! भवति! करीन्द्राणां शुण्डान् कनककदलीकाण्डपटलीम् उभाभ्यामूरुभ्याम् उभयमपि निर्जित्य सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां जानुभ्यां विबुधकरिकुम्भद्वयमपि निर्जित्य असि वर्तसे स्फुरसीति यावत्।

अत्र भवच्छब्दयोगेऽपि असीति मध्यमपुरुष एव भवति। तस्य संबोधनमात्रपरत्वात्। अत्रेदं तत्त्वम्—भवच्छब्दो द्विविधः, संबोध्यपरः, संबोधनमात्रपरश्चेति। संबोध्यपरत्वे भवच्छब्दस्य युष्मदर्थत्वाभावात् "युष्मद्युपपदे" इत्यादिना प्राप्त्यभावात् शेषे प्रथम एव तद्योगे। यथा—"सूते जगन्ति भवती भवती बिभर्ति भावान्" इत्यादि। यदा संबोधनमात्रपरत्वं भवच्छब्दस्य तदा युष्मदर्थत्वात् मध्यमपुरुषः स्यादेव। यथा "भवति भिक्षा देहि" इति। तत्र संबोधनमात्रपरत्वेऽपि ङीप्प्रत्ययः गौरादौ भवतः प्रातिपदिकस्य पाठात् सिद्धः। अत एव **रक्षित** आह—"भवतु प्रातिपदिकसामर्थ्यात् स्त्रीलिङ्ग एव भवच्छब्दस्य संबोधनमात्रपरत्वम्" इति। अयमाशयः—भवच्छब्दस्य सर्वनामसु भवतु प्रातिपदिकग्रहणात्, "उगितश्च" इति ङीप् सिद्ध एवेत्यत्र गौरादौ पठितस्य भवच्छब्दस्य वैयर्थ्यं स्त्रीत्व एव संबोधनमात्रपरत्वमिति ज्ञापयतीति।

नन्वेवं **रक्षितेनैव,** "युष्मदस्मदोः स्त्रीपुंनपुंसकेषु तुल्यलिङ्गत्वं संबोधनमात्रपरत्वात् युष्मदस्मदोः एकद्विबहुत्वपरत्वं तु संबोध्यलक्षणया ; न च लिङ्गलक्षणा, आकाङ्क्षाभावात्" इत्युक्तम्। तद्वद्भवच्छब्दस्याप्यलिङ्गत्वं प्राप्नोतीति। मैवम्, दत्तोत्तरत्वादित्यलमतिविस्तरेण। यत्तु, "त्वामस्मि वच्मि विदुषाम्" इति श्लोकव्याख्यानावसरे **काव्यप्रकाशिका**टीकाकारेण **भास्करेणोक्तं** तदमूलमिति नोपन्यस्य दूषितम्। अत्रोपमालंकारः स्पष्ट एव ॥ ४१ ॥

## अरुणामोदिनी

ऊरुजानुनी च युगपदेव वर्णयति—**करीन्द्राणामिति**। हे गिरिसुते। पर्वतराजपुत्रि! "हिमवद्विन्ध्यमलया गजानां प्रभवा मताः" इति वचनात् गिरिप्रभूतकरिशुण्डाविज-

याथोपयोगीदं संबोधनम्। भवती; त्वम्, उभाभ्याम्; द्वाभ्यामपि, ऊरुभ्याम्; सक्थिभ्याम्; "सक्थि क्लीबे पुमानूरुः" इत्यमरः। करीन्द्राणाम्; गजश्रेष्ठानाम्, शुण्डान्; हस्तान् उपमानतया प्रसिद्धान्, तथा कनककदलीकाण्डानाम् श्रौवर्णरम्भा-तरुप्रकाण्डानामुपमानतया प्रसिद्धाना पटली समूहं, चेति, उभयम्; द्वयमपि, एकदैव निर्जित्य; विजित्य, तस्मादपि अतिसौन्दर्यादिति भावः। अत एवाह कालिदासः—

"नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः।
लब्ध्वापि लोके परिणाहिरूपं जातास्तदूर्वोरुपमानबाह्याः॥

इति। तथा पत्युः; भर्तुः शिवस्य, प्रणतिकठिनाभ्या; प्रणत्या साष्टाङ्गं दण्डवत् पतनरूपेण प्रणामेन, पूजानन्तरजेनेति भावः। कठिनाभ्याम् भूस्पर्शादतिमृदुलतरकमठ-पृष्ठमिव समवासपार्ष्ण्याभ्याम्; सुवृत्ताभ्यां; शोभने च ते वर्तुले च, सुवृत्ते ताभ्याम्, मणिमये मणिमयमुकुरसंनिभाभ्यामित्यर्थः। जानुभ्याम्; जङ्घोर्ध्वभागस्थपिण्डकाभ्याम्, विबुधकरिकुम्भद्वयमपि; विबुधकरिणः ऐरावतस्य, विद्वत्करिणश्चेति ध्वनिः। कुम्भद्वयम् मस्तकद्वन्द्वमपि; विजिग्ये; जितवती। करीन्द्रशुण्डासौवर्णकदलीस्तम्भैरावतकुम्भद-म्भदमनी त्वदीयोरुजानुरमणीयतासंपत्तिरिति भावः। उक्तं च सहस्रनामसु—

"कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्विता।
[1]माणिक्यमुकुराकारजानुद्वयविराजिता॥"

इति। "विपराभ्या जेः" इत्यात्मनेपदम् लिटिरूपमेतत्। "शेषे प्रथमः" इति प्रथमपुरुषः। अत्र व्यतिरेकालंकारेण तयोरत्यौत्कटयध्वनिः॥ ४१॥

**पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते**
**निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत।**
**यदग्रे दृश्यन्ते दशशरफलाः पादयुगली-**
**नखाग्रच्छद्मानः सुरमकुटशाणैकनिशिताः॥ ४२॥**

लक्ष्मीधरा

**पराजेतुमिति।** पराजेतुं, तिरस्कर्तुं, रुद्रं; हरं, द्विगुणशरगर्भौ; द्विगुणी-कृताः शराः पञ्चबाणाः गर्भे ययोस्तौ, गिरिसुते! पार्वति! निषङ्गौ; तूणीरौ, जङ्घे;

[1] माणिक्यमुकुटाकार० इति मुद्रितकोशपाठः.

जङ्घाकाण्डौ, ते; तव, विषमविशिखः; पञ्चबाणः, बाढं; ध्रुवम्, अकृत; कृतवान्, यदग्रे; ययोः निषङ्गस्य अग्रे दृश्यन्ते, दशशरफलाः; दशानां शराणां द्विगुणितानां पञ्चानामित्यर्थः। तेषा फलाः अयोमुखानि, पादयुगलीनखाग्रच्छद्मानः; पादयोः प्रपदयोः युगली द्वितयं, तस्या नखाग्राणां दशानां छद्म व्याजो येषां ते, सुरमकुटशाणैकनिशिताः; सुराणाम् इन्द्रादीनाम् मकुटेष्वेव शाणेषु एके मुख्या निशिताः उत्तेजिताः।

अत्रेत्थं पदयोजना—हे गिरिसुते! विषमविशिखः रुद्रं पराजेतुं द्विगुणशरगर्भौ निषङ्गौ ते जङ्घे अकृत बाढम्। यदग्रे पादयुगली नखाग्रच्छद्मानः सुरमकुटैकशाणैकनिशिताः दशशरफला दृश्यन्ते।

अत्र उत्प्रेक्षालंकारः; जङ्घयोः तूणीरतया संभावनात्। अपह्नवालंकारः; नखाग्राणां फलत्वेनापह्नवात्। अनयोरनुसृष्टिः, अपृथक्स्थितया प्रयोज्यप्रयोजकभावावगतेः। विषमविशिखो बाढमकृतेत्यत्र अतिशयोक्तिरलंकारः, साधारणब्रह्मसृष्टिव्यतिरिक्तत्वेन प्रतीतेः। एतच्च पूर्वमेव व्यक्तीकृतम् 'कुचौ सद्यः स्विद्यत्[1]' इति श्लोकव्याख्यानावसरे। अलंकारेण अलंकारध्वनिरपि, द्विगुणशरगर्भौ दशशरफलाः इति पदद्वयेन पादाङ्गुलीनां शराणां चाभेदाध्यवसायप्रतीतेरित्यलम्॥ ४२॥

## अरुणामोदिनी

जङ्घे वर्णयति—**पराजेतुमिति**। हे गिरिसुते! विषमा विशिखा बाणा यस्य सः, विषमविशिखः; पञ्चबाणः, अविधेयकुण्ठितपरिमितास्त्रत्वाद्दुर्बल इत्यभिसंधिः। मदनः, रुद्रम्, त्रिपुरान्तकम्, पराजेतुम्; पराङ्मुखीकर्तुम्, विजेतुमित्यर्थः। पुराजेतुमिति पाठे, पुरा पूर्वं मदनो रुद्रं जेतुं स्वदर्पहारिणं तमभिभवितुं वैरनिर्यातनस्य वीराणामवश्यविधेयत्वादिति भावः। अत्रासह्यार्थत्वाभावात्, "पराजेरसोढः" इति न पञ्चमी। ते; भवत्याः, जङ्घे; प्रसृते कर्मणी, "जङ्घा तु प्रसृता" इत्यमरः। द्विगुणा द्विरावृत्ताः शराः पञ्चबाणा गर्भे ययोस्तौ द्विगुणशरगर्भौ। अतिक्रोधान्धत्रिपुरान्तकपराजये परिमिताना विषमसंख्यापन्नाना विगतिशिखानां च शराणामपर्याप्तत्वात् तानेव द्विरावृत्त्या समसंख्यतां

[1] ३९ श्लोके.

शृणाति हिनस्तीति व्युत्पत्तेः शर इत्यन्वर्थनामता चापन्ना विधाय धृता ये शराः तद्गर्भाविव्यर्थः । निषङ्गौ इषुधी; "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयो." इत्यमरः । अकृत; कृतवान् । बाढम्; एतदेव सत्यमित्युत्प्रेक्षा । शरान् पञ्चसंख्याकान् द्विगुणीकृत्य भवदीयजङ्घे एव निषङ्गौ विधाय, तत्र प्रत्येकं शरपञ्चकद्वय निहितवान् । मदनः तदन्येषुधे रुद्रविजयसाधनतानर्हत्वादिति भावः । उक्त च सहस्रनामसु; "इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका" इति । कुत इत्येवमुत्प्रेक्ष्यत इत्यत्राह—यदग्र इति । ययोः जङ्घयोः, अग्रे मुखे सुराणा पादाग्रे प्रणमता देवाना मकुटानि किरीटान्येव शाणाः निकषाः, "शाणस्तु निकषः कषः" इत्यमरः । तेष्वेकेषु निशिताः उत्तेजिताः, तीक्ष्णीकृता इत्यर्थः । पादयोः युगली युगलम्, तत्रस्थानि यानि नखाग्राणि नखराञ्चलानि तानीति पद्मछलं येषा ते पादयुग्मावस्थितनखाग्रमिषा इत्यर्थः । दशदशसख्याकाः, शरफलाः बाणाग्राणि;

"फलं प्रयोजने क्लीब तरूणा प्रसवेऽपि च ।
शराग्रे तु फलाः पुसि कृता लोहशलाकयोः ॥"

इति विश्वः । दृश्यन्ते; प्रेक्ष्यन्ते, यतः पादयुगलसस्थितनखाग्रव्याजापन्ना निशिताः शरफला अग्रभागे दृश्यन्ते, अतः त्वदीयजङ्घे मदनेन स्वीयशरान् द्विगुणीकृत्य पूरिते निषङ्गावेवेति प्रतिभातीत्यर्थः । अत्र द्वितीयार्धसस्थितायाः सापह्नवोत्प्रेक्षाया निषङ्गकरणोत्प्रेक्षाहेतुत्वादुभयोः संकरः । तया च देवीप्रसृतयोः मदनेषुध्योरिवातिरम्यत्व द्योत्यते ॥४२॥

**श्रुतीनां मूर्धानो दधति तव यौ शेखरतया**
**ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।**
**ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी**
**ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ४३ ॥**

लक्ष्मीधरा

**श्रुतीनामिति** । श्रुतीनां; निगमानां, मूर्धानः; शिरांसि, वेदान्ता इत्यर्थः । दधति धारयन्ति, प्रतिपादयन्तीत्यर्थः । तव; भवत्याः, यौ चरणौ; पादौ, शेखरतया; उत्तंसतया, यद्वा—श्रुतीनां श्रुतिवधूना मूर्धानः श्रुतयः भगवतीपादाब्जमुत्तंसयन्ति । यथोक्तं श्रुतिवाक्यं शक्ति प्रति **वसिष्ठेन**—

"नमो देव्यै महालक्ष्म्यै श्रियै सिद्ध्यै नमो नमः ।
ब्रह्मविष्णुमहेशानवेदकैः पूजिताङ्घ्रये ॥"

वेदकैरित्यत्र वेदानां कैः शिरोभिरिति । "नमस्त्रिपुरसुन्दर्यै शिवायै विश्वमूर्तये" इत्यादि ;

"एवं स्तुता महादेवी श्रुतिभिः प्रीतमानसा ।
प्राह तां प्रति तादृग्भिर्वचोभिरमरेश्वरी ॥"

इत्यादि **वसिष्ठसंहितायाम्** । ममापि एतौ ; चरणौ, मातः ! जननि ! शिरसि ; मूर्धनि, दयया ; कृपया, कृपाविष्टचित्तेनेत्यर्थः । धेहि, निधेहि, चरणौ ; पादौ, ययोः ; चरणयोः संबन्धि, पाद्यं पाथः ; पादनिर्णेजनजलम्, यद्यपि पाद्यमित्युक्ते पादसंबन्धः प्रतीयते, तथापि पाद्यमित्युक्ते पादप्रक्षालनार्हं पाद्यमित्यर्हतामात्रप्रतीतौ विशेषाकारेण ययोरित्यस्यान्वय इति न पौनरुक्त्यम् । पशुपतिजटाजूटातटिनी ; पशुपतेः शिवस्य जटाजूटे कपर्दे तटिनी गङ्गा, ययोः ; चरणयोः, लाक्षालक्ष्मीः ; लाक्षारसकान्तिः, अरुणहरिचूडामणिरुचिः ; अरुणश्चासौ हरिचूडामणिश्च कौस्तुभः तस्य रुचिः रक्तिमा ।

अयमर्थः—प्रणयकोपशान्तये प्रणतस्य पशुपतेः जटाजूटवर्तिनी गङ्गा पादाग्रवर्तिनी आसीदिति गङ्गायाः पाद्यजलत्वं कथितम् । प्रतिदिनं सायंप्रातः सेवार्थं नमस्कुर्वाणस्य विष्णोः मकुटघटितकौस्तुभमणेः श्वेतवर्णस्य लाक्षारसप्रसादजन्योरुणिमेति ध्येयम् ।

अत्रेत्थं पदयोजना—हे जननि ! तव यौ चरणौ श्रुतीनां मूर्धानः शेखरतया दधति । हे मातः ! एतौ चरणौ ममापि शिरसि दयया धेहि । ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी, ययोः लाक्षालक्ष्मी. अरुणहरिचूडामणिरुचिः ।

एतदुक्तं भवति—भगवत्याः पादाम्बुजद्वितयस्य वेदमूर्धनि सदाशिवमूर्धनि विष्णुमूर्धन्येव संचार इति मूर्धसंचारस्वाभाव्यमस्ति । अतो मम मूर्धन्यपि संचरतु पादाम्बुजमिति प्रार्थनासामञ्जस्यमिति कवेरभिप्रायः । यद्वा—प्रपञ्चजनयित्र्याः सादाख्यायाः प्रपञ्चान्तःपातिनः हरिविरिञ्चिपशुपतिवेदान्ताः पादाम्बुजं शिरसि

धारयन्ति। तन्निर्णेजनजलेन पवित्रितगात्राः तन्महिम्ना तत्तदधिकारान् भजन्त इति युज्यत एवेति। अत्र रूपकालंकारः स्पष्टः ॥ ४२ ॥

## अरुणामोदिनी

अथेदानीं देवीचरणयोरखिलवेदान्तप्रतिपाद्यतावर्णनापूर्वकं स्वशिरो निधापनमाशास्ते—श्रुतीनामिति। हे मातः! पुत्रजनवत्सले! देवि! श्रुतीना मूर्धानः; वेदान्ताः, जगत्कारणभूतदेवताप्रतिपादका इत्यर्थः। तव; भवत्याः संबन्धिनौ, यौ; पादौ चरणौ, शेखरतया; शिरोभूषणतया, दधति; स्थापयति। मूर्धा शिरोभूषणेन प्रकाशातिशयसद्भावात् श्रुत्याख्यस्त्रीणामपि मूर्धसु शिरोभूषणाभिलाषादतिसुन्दरभवत्पादावेव भूषण स्थापयन्तीत्यर्थः। समस्तवेदान्तप्रतिपाद्याविमौ भवत्पादाविति भावः। "लोकस्य द्वारमर्चिमत्पवित्रम्" इत्यादिश्रुतेरित्याशयः। सकलवेदान्तप्रतिपाद्यावेताविमावपि चरणौ पादौ दयया दीनानुकम्पया अनुग्राह्योऽयमिति, निधेहीत्यर्थः। ममात्मनोऽपि श्रुतीनामिवेत्यर्थः। यद्वा—शिवादिवदनुग्राह्यस्य वेत्यर्थः। शिरसि शीर्षे नपुंसकतया दौर्बल्येन श्रुतिमूर्धापेक्षया प्रसाद्ये इत्यर्थः। धेहि निधेहि, स्थापयेत्यर्थः। भवत्याश्च;

> "यं कामये तं तमुग्रं कृणोति तं ब्रह्माणं तमृषिं तं सुमेधाम्।
> अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ ॥"

इति श्रुतेः भक्तवात्सल्यात् तस्यातिमहत्त्वसंपादिकात्वादस्य भक्तस्य श्रुतिवन्निष्कलंकतया अनुग्राह्यत्वात् भवत्पादातिरिक्तातिपवित्रवस्त्वन्तरालाभात् ताभ्या शिरो निधाय तेनैवायमनुग्राह्य इत्यभिसंधिः।

ननु पतितपवित्रीकरणचतुराणां मन्दाकिनीपयःप्रभृतीनां विद्यमानत्वादभीष्टदानचतुराणां देवतान्तराणा वेदप्रतिपाद्याना चोपलम्भात् कुत एतदेव प्रार्थ्यत इत्याशङ्क्य भवच्चरणादन्यत्पावयित्रभीष्टदातृ वा कृत्स्नवेदान्तप्रतिपाद्यं लभ्यत इत्याशयेनाह—ययोरिति। पशुपतिजटाजूटतटिनी; सकललोकपावयित्री शिवजटास्थितमन्दाकिनी ययोश्चरणयोः, पाद्यं; पादाय हितम्, "पादार्घाभ्यां च" इति यत्प्रत्ययः। "पाद्य पादार्थवारिणि" इत्यमरः। पाथः; जलम्। मन्दाकिनीजल भवत्पादजलमेवेत्यभिप्रायः। अत्र प्रणयकुपितायाः भगवत्याः प्रसादनार्थं प्रणतस्य परमेशितुः जटाजूटवर्तिन्या गङ्गायास्तत्पादारविन्दावस्थानात् तस्याः पाद्यत्वं भगवतीचरणयोः प्राशस्त्यं चोक्तमित्यवगन्तव्यम्। नचैवं चेत्, 'पत्युः प्रणतिकठिनाभ्याम्' इति शिवस्य भगवतीकृतप्रणामसंप्रदानताकथनविरोधः। "समप्रधानौ समसत्त्वौ समौजसावुभा दाता-

राविह सौभगानाम्" इति श्रुत्या उभयोः समप्राधान्योक्तिरिति । एतच्च प्राङ्निरूपितमेवास्माभिरित्युपरम्यते । तथा ययोः; चरणयोः, अरुणस्य पद्मरागनद्धतया अरुणवर्णस्य हरिचूडामणेः विष्णुशिरोमुकुटस्य रुचिः अरुणशोभा, लाक्षालक्ष्मीः; अलक्तकसंपत्तिः, लाक्षारसारुणिमेति केचित् । एवमलौकिकक्षालनलाक्षावन्तौ शिवविष्णुभ्या नित्यप्रणतौ सकलवेदान्तप्रतिपाद्यौ चरणौ मन्मस्तके स्थापय । तावन्मात्रेण वा अहं कृतार्थो भवानीति तात्पर्यार्थः । एतेन च, सर्वदेवतानमःशेषित्वं भगवतीचरणयोरेवेति सिद्धम् । "सर्वदेवनमस्कारः केशवं प्रति गच्छति" इति स्मृतेश्च भगवत्या नमःशेषित्वप्रतिपादकबहुश्रुत्युपलम्भात् विरोधाधिकरणन्यायेनाप्रमाणता वर्णनीया । अत्र रूपकालंकारेण देवीचरणयोः सर्वोत्कर्षताध्वनिः ॥ ४३ ॥

**नमोवाकं ब्रूमो नयनरमणीयाय पदयो-**
**स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।**
**असूयत्यत्यन्तं यदभिहननाय स्पृहयते**
**पशूनामीशानः प्रमदवनकङ्केलितरवे ॥ ४४ ॥**

### लक्ष्मीधरा

**नमोवाकमिति** । नमोवाकं; नम इति वाक्यम् । नमोवाकशब्दो निपातनात्साधुः । ब्रूमः; वदामः, नमस्कुर्म इत्यर्थः । नयनरमणीयाय; नेत्रयोः प्रियकराय, पदयोः; चरणयोः, तव अस्मै; परिदृश्यमानाय, द्वन्द्वाय; युग्माय, स्फुटरुचिरालक्तकवते; स्फुटरुचये; स्फुरत्प्रभाय, रसालक्तकवते; सार्द्रालक्तकाय, विशेषणसमासः । असूयति; ईर्ष्यति, अत्यन्तं, नितरां, यदभिहननाय; येन पदयुगेन अभिहननं ताडनं तस्मै, अभिहननं न सहत इत्यर्थः । "अशोकश्चरणाहतिव्यक्तिपुष्पः" इति **दोहदकौतुके** । स्पृहयते; स्पृहां कुर्वते, पशूनामीशानः; पशुपतिः, प्रमदवनकङ्केलितरवे; प्रमदवनम् उद्यानवनं, तत्र कङ्कलितरुः अशोकः तस्मै असूयति ईर्ष्यति । उभयत्र "क्रुधद्रुह—" इत्यादिना, "स्पृहेरीप्सितः" इत्यनेन संप्रदाने चतुर्थी ।

अत्रेत्थं पदयोजना—हे भगवति! तव नयनरमणीयाय स्फुटरुचिरसालक्तकवते पदयोरस्मै द्वन्द्वाय नमोवाकं ब्रूमः, पशूनामीशानः यदभिहननाय स्पृहयते प्रमदवनकङ्केलितरवे अत्यन्तम् असूयति ।

प्रणयकलहसमये अनुग्रहात्मा पादाघातो न कस्यापि संभाव्यत इति अचेतनवस्तुनोऽपि कङ्केलितरोः कथं स्यादिति तत्रैवासूया नान्यत्रेति भावः। अनेनात्यन्तं पातिव्रत्यं पार्वत्याः प्रतिपादितम्। एतादृशं पातिव्रत्यं लक्ष्मीसरस्वत्योर्नास्तीति ध्वन्यते।

अत्रातिशयोक्तिरलंकारः; पशुपतेरीर्ष्यया असंबन्धेऽपि संबन्धकथनाद्भेदाध्यवसायप्रतीतेः॥ ४४॥

## अरुणामोदिनी

तादृशचरणयोः नमस्कारं करोति—**नमोवाकमिति**। हे देवि! स्फुटरुचिरसालक्तकः; विशदशोभार्द्रयावकः अलक्तकरसो वा अस्यास्ति प्रसाधकत्वेनेति तद्वते, प्रकाशमानयावकाङ्किताय, तथा नयनयोः नेत्रयोः रमणीयाय, दृश्यायेत्यर्थः। तव; भवत्याः, अस्मै; प्रकाशमानाय, पदयोः; चरणयोः, द्वन्द्वाय; श्रुतिमूर्ध्नीव मच्छिरस्यापि निहितायेत्यर्थः। नमोवाकम्; उच्यत इति वाकः, "अकर्तरि च कारके संज्ञायाम्" इति घञ्। नमसो वाको नमोवाकः, त नमस्कारवाच्यं ब्रूमो वदामः। नमस्कारं कुर्म इत्यर्थः। "नमः स्वस्ति—" इत्यादिना चतुर्थी। भगवतीपादयोः परमेश्वरस्य भक्त्यतिशयं प्रकटयन् तयोर्महिमानमाह—**असूयतीति**। पशूनामीशानः; पशुपतिः, अनभिव्यक्तगृहपतितुल्यो स्थानकोऽपि चेति ध्वनिः। यस्य पादद्वन्द्वस्य अभिहननाय ताडनाय स्पृहयते वाञ्छते; "स्पृहेरीप्सितः" इति संप्रदानत्वात् चतुर्थी। "पादाहतः प्रमदया विकसत्यशोकः" इत्यादिकविवचनात् उत्तमाङ्गनापादताडनस्याशोकदोहदत्वादिति भावः। उक्तं च **रामकविना**—

"पादाहत्याप्यशोको वदनमदिरया केसरः पाणिमर्शा-
च्चूतो वीक्षाहसाभ्या तिलकतरुनमेरुप्रियालुश्च गीत्या।
सलापात्कर्णिकारः कुरवकतरुरालिङ्गनात्सिन्दुवारः
श्वासात्स्त्रीणां विकास भजति च मदरागेण चम्पश्च शाखी॥"

इति। प्रमदाना वनं प्रमदवनम्, क्रीडावनमित्यर्थः। "ङयापोः सञ्ज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वः। कालिदासवत्। "प्रमदावनं प्रमदवनम्" इति **द्विरूपकोशः**। तत्र यः कङ्केलितरुः अशोकवृक्षः तस्मै; "कङ्केलिः कामकेलिः स्यादशोको रक्तपुष्पकः" इति **विश्वः**। अत्यन्तम्; अतिमात्रम्, असूयति; कुप्यति। विकासनाय देवीपादताडनरूपदोहद-

माकाङ्क्षमाणायाशोकाय वृक्षाय प्रणयकलहावसरे मदनुग्रहात्मातिसुन्दरदेवीपादघातोऽनेन सानभिज्ञेनाचेतनेन किमर्थमाकाङ्क्ष्यत इत्यनभिज्ञपरिपालकत्वात् अविशेषानभिज्ञोऽयं निरन्तरं क्रुध्यति। न ह्यतिकामुका: स्वकान्तान्यस्य स्पर्शं स्वसाम्यतापादक संमन्वत इति भाव:। "क्रुधद्रुहेर्ष्यासूयार्थाना यं प्रति कोप:" इति चतुर्थी।एवविधाय शिवाद्यभिकाङ्क्षितपादघाताय सर्वोत्तमाय पदद्वन्द्वाय नमस्कारं कुर्म इत्यर्थ:। अत्र, ब्रूम इति बहुवचनेन नमोवाके भक्तिश्रद्धातिशयो द्योत्यते। तथा च श्रुति:—"भूयिष्ठा ते नम उक्तिं विधेम" इति। अत्र, अशोकपश्वीशानयो: पादताडनाभिलाषासूययोरसंबन्धेऽपि तत्संबन्धकथनरूपातिशयोक्तिद्वयेन देव्या लक्ष्मीवाण्याद्यपेक्षया असुवलितपातिव्रत्यरूपवस्तुन: स्वजायाया: पादेनापि अन्यपुरुषसस्पर्शमसहमानपुरुषवृत्तान्तस्य च प्रतीते: समासोक्तिर्व्यज्यत इत्यलंकारेण वस्त्वलकाररूपो ध्वनि: ॥ ४४ ॥

**मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं**
**ललाटे भर्तारं चरणकमले ताडयति ते।**
**चिरादन्त:शल्यं दहनकृतमुन्मूलितवता[1]**
**तुलाकोटिक्वाणै: किलिकिलितमीशानरिपुणा ॥ ४५ ॥**

### लक्ष्मीधरा

**मृषेति**। मृषा; अकस्मादेव, कृत्वा गोत्रस्खलनं; गोत्रस्य स्खलनं नाम नायिकायामनुरागं प्रकटयतस्तत्समीप एव प्रमादात् नायिकान्तराविष्टचित्तस्य तन्नामोच्चारणम्। अथ; गोत्रस्खलनानन्तरम्, वैलक्ष्यनमितम्; वैलक्ष्येण इतिकर्तव्यतामौढ्येन नमितम्। अत्र नमितमिति वैलक्ष्यप्राधान्यात् वैलक्ष्येणैव नमित:, न तु स्वयं वैलक्ष्यान्नमित:। अत्युत्कृष्टं वैलक्ष्यमासीदिति नमितशब्दं प्रयुञ्जानस्य भाव:। ललाटे; निटिलप्रदेशे, भर्तारं; पशुपतिं, चरणकमले; पादाम्बुजे, ताडयति; सति सति चरणकमलेन भर्तुर्ललाटं ताडितवत्या भवत्यामित्यर्थ:। ललाटताडनं भर्तृपर्यन्तं गच्छतीति भर्तारं ताडयतीत्युक्तिराञ्जसीति एतादृशप्रयोगा: महाकविप्रयोगात् सहृदयहृदयाह्लादका:। ते; तव, चिरात्; चिरकालमनुस्यूतम्, अन्त:शल्यम्; हृदयशल्यं, वैरमित्यर्थ:। दहनकृतं; नयनाग्निना प्लोषणकृतम्, उन्मूलित-

[1] उन्मीलितवता अरुणामोदिनी.

वता तुलाकोटिक्वाणैः, तुला नूपुरं तस्य कोटयः अग्राणि, तैरन्तर्गता मणयः क्षुद्रघण्टादयः लक्ष्यन्ते । तेषां क्वाणैः; शिञ्जितैः किलिकिलितम् । किलिकिलेत्यनुकरणं विजयिनः सुप्रसिद्धम् । किलिकिलिरवः कृत इत्यर्थः । ईशानरिपुणा; मन्मथेन, मन्मथस्य ईशानं प्रति रिपुत्वं तदा सिद्धमिति भावः ।

अत्रेत्थं पदयोजना—हे भगवति! मृषा गोत्रस्खलनं कृत्वा अथ वैलक्ष्यनमितं भर्तारं ते चरणकमले ललाटे ताडयति सति ईशानरिपुणा चिरात् दहनकृतम् अन्तःशल्यम् उन्मूलितवता तुलाकोटिक्वाणैः किलिकिलितम् ।

अत्रातिशयोक्तिरलंकारः; तुलाकोटिक्वाणाना किलिकिलितध्वनित्वेनाध्यवसानात् भेदे अभेदनिबन्धनातिशयोक्तिः ॥ ४५ ॥

## अरुणामोदिनी

पादाघातवर्णनापूर्वकं पादवर्णनमेवाह—मृषेति । हे देवि! मृषेत्ययमलीके । अलीकमेव गोत्रस्खलनम्; भवत्सपत्नीनामग्रहण, कृत्वा, विधाय, भवच्चरणताडनजनितश्रृङ्गाररसानुबुभूषया कोपेन विना तदलाभात् तदुद्भावनहेतुभूतं सपत्नीनामग्रहणरूपमपराधमलीकरूपमेव विधायेत्यर्थः । अथ; विलक्षस्य भावो वैलक्ष्यम्, तेन लज्जया नमितं नम्र सपत्नीनामग्रहणापराधात् लज्जया प्रह्वीभूतमित्यर्थः । गोत्रस्खलनविधानफलं देवीचरणप्रहारसौभाग्यमिदानीमेव प्राप्स्यतीत्याशयेनेति भावः । भर्तारमलीकमेव सपत्नीनामानूच्य त्वदीयपादपङ्कजप्रहाराभिलाषिणं पति शिवं भर्तृत्वात् श्रृङ्गारशास्त्राविरोधेऽपि शास्त्रान्तरविरोधात् पादप्रहारायोग्यमित्यभिसधिः । ते, भवत्याः चरणकमले, पादपङ्कजे, अभिज्ञे मृदुले भूषणतासंपादके चेत्यभिसधिः । ललाटे; अलिके, ताडयति; प्रहरति सति, सपत्न्यलीकगोत्रोच्चारणापराधात् स्वस्यास्तात्पर्यपरिज्ञानसामर्थ्यप्रदर्शनायेकारभेदेऽपि तच्छब्दवाच्यालीकस्थानमेव विध्यति सतीति भावः । दहनेन ललाटाग्निना कृतं विहितं कोपावेशेन स्वभस्मीकरणरूपम्, चिरात्; चिरकालमारभ्यान्तरे स्थितं शल्यं शल्यप्रायं वैरम्, उन्मीलितवता; वैरनिर्यातनस्य वीरधर्मत्वात् तत्समयलाभात् तत्प्रकटयता, उन्मूलितवतेति पाठे चिरधृतं शल्यमिदानीमपनयता; ईशानरिपुणा; स्मरेण, तुलाकोटेः पादाङ्गदस्य क्वाणैः ध्वनिभिः, "पादाङ्गदं तुलाकोटिः" "निक्वाणो निक्वणः क्वाणः" इति चामरः । 'तुलाकोटेः' नूपुरस्य कोटयोऽग्राणि तैः अन्तर्गताः मणयः क्षुद्रघण्टिकाः लक्ष्यन्ते, इति लक्ष्मीधरोक्तं कोशविरोधादुपेक्ष्यम् । किलिकिलितम्; किलिकिलध्वनिविधायिना जातम्, देवीपादेन अलिके ताडिते तत्र स्थितस्य वह्नेः

ताडनात् त्वदाश्रयेण मदनेन शात्रवदर्पनिवारणपूर्वकं सिंहनादो विरचित इत्यर्थः। किलिकिलीत्यनुकरणशब्दात् भावे क्तः। जितशात्रवदर्पस्य प्रतिज्ञापूरणा कृतः। "वीरस्य गर्जितः सिंहनादः किलिकिलारवः" इति विश्वः। गोत्रस्खलनं विधायापि शिवेनाभ्यर्चनीयो यश्चरणघातः, तस्मै नमस्कारं कुर्म इत्यर्थः। अत्र सापह्नवोत्प्रेक्षातिशयोक्तिभ्या देव्याश्रितसूक्तजनलाघवासहनं वस्तु द्योत्यते ॥ ४५ ॥

**हिमानीहन्तव्यं हिमगिरिनिवासैकचतुरौ**
**निशायां निद्राणं निशि चरमभागे च विशदौ।**
**वरं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनां**
**सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम् ॥ ४६ ॥**

### लक्ष्मीधरा

**हिमेति**। हिमानीहन्तव्यं; हिमान्या हिमसंहत्या हन्तव्यं नाशितव्यं, हिमगिरिनिवासैकचतुरौ, सर्वदा हिमगिरावेव वसन्तावित्यर्थः। निशायां; शर्वर्यां, निद्राणं; मुकुलितं, निशि चरमभागे च विशदौ; प्रसन्नौ चेतनाशक्तेः तत्रैवोत्पत्तेरिति भावः। चकारात् दिवापि प्रसन्नावित्यर्थः। वरम्; ईप्सितं, लक्ष्मीपात्रं, लक्ष्म्या अधिष्ठितमित्यर्थः। श्रियं; लक्ष्मीम्, अतिसृजन्तौ; उत्पादयन्तौ, समयिनां; स्वभक्तानां, समयस्वरूपं, 'तवाधारे मूले'[1] इति श्लोके निरूपितम्। सरोजं; कमलं कर्मभूतं, त्वत्पादौ; जननि! हे मातः! जयतः विजयेते। चित्रम्; आश्चर्यम्, इह अस्मिन्नर्थे किम्? न किमपीत्यर्थः।

अत्रेत्थं पदयोजना—हे जननि! हिमगिरिनिवासैकचतुरौ निशि चरमभागे च विशदौ समयिनां श्रियमतिसृजन्तौ त्वत्पादौ हिमानीहन्तव्यं निशायां निद्राणं वरं लक्ष्मीपात्रं सरोजं जयतः; इह किं चित्रम्, आधिक्यस्य स्फुटत्वादित्यर्थः। अत्र व्यतिरेकालंकारः स्फुटः ॥ ४६ ॥

### अरुणामोदिनी

पादावेव वर्णयति—हिमानीति। हे जननि! समस्तजगन्मातः! देवि! हिमप्रधानो गिरिः हिमगिरिः, तत्र निवासे स्थितावेकैकस्मिन् चतुरौ कुशलौ निरन्तरं हिम-

[1] आनन्दलहर्यां ४१ श्लोके.

वत्कृतसंचारावपि हिमबाधारहितौ अक्षीणशोभौ चेत्यर्थः । तथा निशि ; रात्रौ, चरमभागे ; पश्चाद्भागे च, विशदौ ; प्रसन्नौ, विकसितावित्यर्थः । निशि च परभागेन विशदाविति पाठे ; रात्रौ परभागे गुणोत्कर्षे च, "परभागो गुणोत्कर्षे" इत्यमरः । यद्वा "परभागो भवेद्वर्णद्वयसंसर्गजा रुचिः" इत्यभियुक्तोक्तेः । रात्रेः तमप्रधानत्वात् नीलकान्त्योः पादयोररुणत्वात् तत्कान्त्योश्च मेलनेन मिश्रवर्णे च सति विशदावित्यर्थः । तथा समय. देवीचरणभक्तिभावप्रतिपादक शास्त्रम् आन्तरपूजाप्रधानमेषामस्तीति समयिनः ; "अत इनि ठनौ" इति मत्वर्थीय इनिः । तेषा समयाचारतत्पराणाम् ;

"आविर्भवत्फलकसंहतिभिः शरैश्च निष्यन्दमानसलिलैर्नयनैश्च नित्यम् ।
वाग्भिश्च गद्गदपदाभिरुपासते ये पादौ तवाम्ब भुवनेषु त एव धन्याः ॥"

इत्यम्बास्तवोक्तेः । एवमुपासनया धन्यता प्राप्ताना श्रियं वाञ्छिताधिका लक्ष्मीं महदैश्वर्यमतिसृजन्तौ, उपासितयोर्भवत्पादाब्जयोश्च वाञ्छिताधिकफलप्रदातृत्वं देवीमाहात्म्ये ;

"तामुपैहि महाराज शरणं परमेश्वरीम् ।
आराधिता सैव नृणां भोगस्वर्गापवर्गदा ॥"

इति साकल्येन देवीमाहात्म्यं वदतो मुनेरनुज्ञया यथाशास्त्रं तपस्यतोरनन्यमनस्कतया त्रिवर्षपर्यन्तं भगवत्पादाम्बुजमाराधयतोः सुरथसमाधिनामधेययोः राजवैश्ययोः अत्युत्कटमभीष्टं ;

"स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान् ।
हत्वा रिपूनस्खलितं तव तत्र भविष्यति ॥
मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः ।
सावर्णिको नाम मनुर्भवान् भुवि भविष्यति ।
वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः ।
तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति ॥"

इत्यादिवचनैः मन्वन्तराधिपत्यनिष्कलङ्कज्ञानरूपं ददत्या त्वयैवाविष्कृतमिति भावः । उक्तं च चर्चास्तवे ;

"पृथ्वीभुजोऽप्युदयनप्रवरस्य तस्य विद्याधरप्रणतचुम्बितपादपीठः ।
तच्चक्रवर्तिपदवीप्रणयः स एषस्त्वत्पादपङ्कजरजःकणजः प्रसादः ॥

लक्ष्मीवशीकरणकर्मणि कामिनीनामाकर्षणव्यतिकरेषु च सिद्धमन्त्रः ।
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो देवि त्वदङ्घ्रिजनितो जयति प्रसादः ॥"

इति । आचार्यैश्च प्रागेव निरूपितम्, 'भयात् त्रातुम्' इत्यादिना देवीचरणयोरत्युत्कटफलदातृत्वमित्यलम् । यद्वा—समयिना भवत्पादाम्बुजम्, "लोकस्य द्वारमर्चिमत्पवित्रम्" इत्यादिश्रुतिप्रामाण्यादभ्युपेत्य हृदये उपासतां भक्तानां श्रियं सर्ववितर्कविलयपूर्वकं स्वप्रकाशनरूपां लक्ष्मीमतिसृजन्तः, भगवतीचरणध्याना (दिकं विना) समयितर्कजालच्छेदनाभावादिति भावः । यथोक्तमम्बास्तवे ;

"यावत्परं[1] पदसरोजयुगं त्वदीयं नाङ्गीकरोति हृदयेषु जगच्छरण्ये ।
तावद्विकल्पजटिलाः कुटिलप्रकारास्तर्कग्रहाः समयिना प्रलयं न यान्ति ॥"

इति । एवंविधौ त्वत्पादौ ; भवत्याः चरणौ महत्वे, "हिमानी हिमसंहतिः" इत्यमरः । "इन्द्रवरुणभव—" इत्यादिना, "हिमारण्ययोर्महत्वे" इति च ङीषानुकौ । तया क्षणविनाशिन्या स्त्रीमात्रेणेति च ध्वनिः । हन्तुमर्हम् हन्तव्यम्, हिंसितुमर्हम्, विनाशयुक्तमित्यर्थः । अत एव नित्यहिमवत्प्रदेशे चरिष्णुः भवत्पादपङ्कजोपमानीभवितुं न भवतीत्यभिप्रायः । तदा निशायां रात्रौ कस्याश्चित् स्त्रीसमीपे चेति ध्वनिः । निद्राणं मुकुलनशीलं रात्रिदिवं प्रफुल्लभवत्पादसाम्यानर्हमिति भावः । परमत्यन्तम् ईषद्वा, लक्ष्म्याः पात्रम्, रमाया अधिष्ठानभूतं तत् भवत्पादवदखिलेष्टार्थवितरणधुरीणमिति भावः । एवंविधं सरोजम् उत्पत्तितोऽप्यतितुच्छत्वात् न्यूनगुणवत्तया च विजयप्रतिभटना भवतानर्हमिति भावः । जयतः विजयते । इह किं चित्रम्? आश्चर्यं तूक्तप्रकारेणोत्कृष्टगुणवद्भ्या हीनगुणवत्पराजयो नाद्भुतकर इति भावः । अत्र व्यतिरेकालंकारेण देवीचरणयोः सर्वदा भजनीयता द्योत्यते ॥ ४६ ॥

**पदं ते कीर्तीनां प्रपदमपदं देवि विपदां**
**कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम् ।**
**कथं वा बाहुभ्यामुपयमनकाले पुरभिदा**
**यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ४७ ॥**

### लक्ष्मीधरा

**पदमिति ।** पदं ; स्थानं, ते ; तव, कीर्तीनां ; यशसां, प्रपदं ; पादाग्रम्, अपदम् ; अस्थानं, देवि ! द्योतनशीले ! भगवति ! विपदाम् ; आपदां, कथं,

[1] पदमिति मुद्रितकोशपाठः

कथंकारं, नीतं; प्रापितं, सद्भिः; कवीन्द्रैः, कठिनकमठीकर्परतुलां; कठिनस्य कमठीकर्परस्य तुलां, कथं वा; कथंकृत्वा, बाहुभ्यां; हस्ताभ्याम्, उपयमनकाले; विवाहसमये, पुरभिदा; सदाशिवेन, यत्; पदम्, आदाय; गृहीत्वा, न्यस्तं; दीप्तं, दृषदि; उपलाधारभूता शिला दृषत्, उपलम्, हरिद्रादिद्रव्यस्य पेषणिका शिला। तदाधारभूता शिला दृषत्। सा विवाहसमये अश्मस्थापनानुष्ठानार्थं पात्रत्वेन प्रयुक्ता, तस्यां दृषदि, दयमानेन; दयावता, मनसा; दया विहायातिमृदुलं पादाम्बुजं दृषदि कथं स्थापितं शंभुना। अमृतस्यन्दिनीभिः वाग्विलासैः कवीश्वराः कमठपृष्ठेन तुल्यतया कथं वर्णयन्ति। एतदुभयमयुक्तमित्यर्थः।

अत्रेत्थं पदयोजना—हे देवि! कीर्तीनां पदं विपदामापदं ते प्रपदं सद्भिः कठिनकमठीकर्परतुलां कथं नीतम्। दयमानेन मनसा पुरभिदा उपयमनकाले बाहुभ्यां यदादाय कथं वा दृषदि न्यस्तम्।

अत्रानन्वयालंकारो ध्वन्यते, सदृशान्तरनिषेधात् असदृशस्य पादाम्बुजवस्तुनः स्वयमेव स्वस्य तुल्यमिति प्रतीतेः ॥ ४७ ॥

## अरुणामोदिनी

पादाग्रं वर्णयति—पदमिति। हे देवि! प्रकाशमानविग्रहे! कीर्तीनाम्; प्रशंसानाम्, स्तुतीनाम्। "कीर्तिः प्रशंसायशसोः" इति रत्नमाला। पदं स्थान निरन्तरं प्रशंसावर्णनयोः स्थानमित्यर्थः। कुत एतदित्यत्राह—विपदाम्; आध्यात्मिकादीनां सांसारिकदुःखानाम्, अपदम्; अस्थानम् समस्तापद्रहितम्, तन्निवारकं चेत्यर्थः। ते; भवत्याः, प्रपदम्; पादाग्रम्; "पादाग्रं प्रपदम्" इत्यमरः। सद्भिः; उपमानीकरणचातुरीधुरीणैः प्राचीनकविभिः, उपमादोषविधानज्ञैः असूयादिदोषदूषितैश्चेत्यभिसंधिः। कठिनकमठीकर्परतुलाम्; कठिनोऽतिपरुषः यः कमठीकर्परः डुलीपृष्ठभागः। "वर्षाभ्वी कमठी डुली" इत्यमरः। तेन परुषतया उपमानानर्हेण तुलां साम्यं, कथं? केन प्रकारेण वा, नीतं; प्रापितम्। सत्स्वभावैरप्यादिकविभिः दुर्हृदयैरिव अतिमार्दवकाठिन्याभ्यां परस्परसाम्यानर्हयोः विपदनभिज्ञभवत्पादाग्रकमठीपृष्ठयोः, स्वपदाग्रनिर्धूतकूर्मेशपृष्ठाम्, "गूढगुल्फा कूर्मपृष्ठजयिष्णुप्रपदान्विता" इत्यादिना निर्दयं कथं साम्यमुक्तमित्यर्थः। अतस्तद्विचार्यमेवेति भावः।

विपदनभिज्ञत्वज्ञापनपूर्वकमुक्तार्थमेव द्रढयति—कथं वेति। किं च उपयमनकाले; पाणिग्रहणसमये, पुरभिदा; त्रिपुरान्तकेन, अतिकाठिनहृदयेनेत्यभिसंधिः।

हस्ताभ्याम्; पाणिभ्याम्, यत्; पदं, तदेकदेशमङ्गुष्ठमित्यर्थः। आदाय; परिगृह्य, "आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव" इति मन्त्रेण परिगृह्य, दयमानेन; करुणाविष्टेन, मनसा; मृदुलेनान्तःकरणेन, दृषदि; उपलसारभूते पिष्टादिपेषणसाधनेऽश्मनि; अनुचितस्थान इत्यभिसंधिः। कथम्; केन प्रकारेण वा? न्यस्तम्; निहितम्। विवाहसमये गृहिधर्मिणा धर्मार्थादीना सर्वेषां गृहे गृहिण्यधीनत्वेनात्तवस्त्रपशुपुत्रादिसमृद्धिमत्या त्वया कदाचिदपि मद्वचनानुकूल्यरूपाद्धर्मान्न चलितव्यमित्यभिप्रायेण; "सोमः प्रथमो विविदे गन्धर्वः" इत्यारभ्य, "मह्यं त्वादुर्गार्हपत्याय देवाः" इत्यन्तेन मन्त्रजातेन कन्यायाः स्वीयता प्रतिपाद्य, ततश्च, "मन्मनसं कृणोतु" इत्यन्तमानुकूल्यं संप्रार्थ्य, ततश्च तस्याः पशुपुत्रादिसमृद्धिप्राप्त्याशंसनरूपम्, "एकमिषे" इत्यादिमन्त्रजातेन सप्तपद्यनुक्रमणं विधाय, चरणग्रहणपूर्वकमश्माधिरोहणस्य लौकिककन्याया विहितत्वादेवमलौकिककन्याया देव्या अप्यवश्यंभावात् जगत्कुटुम्बभरणभारं भवत्यां विन्यस्य स्वयमुदासीनवत् भाररहितो भवानीति पादोपग्रहण कृत्वा अतिकठिने दृषत्प्रदेशेऽधिरोहण कथं वा अनेनेति मृदुलेन कारितमित्यर्थः। त्रिपुरान्तकस्यापि दयारससंपादकं भवच्चरणाग्रं वैधदृषत्प्रदेशनिवेशवेलायामपीत्यतिसौकुमार्यं सूचितम्। अत्रातिशयोक्त्यनुप्रासयोः संसृष्टिः॥ ४७॥

**नखैर्नाकस्त्रीणां करकमलसंकोचशशिभि-**
**स्तरूणां दिव्यानां हसत इव ते चण्डि चरणौ।**
**फलानि स्वःस्थेभ्यः किसलयकराग्रेण ददतां**
**दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ॥ ४८॥**

लक्ष्मीधरा

**नखैरिति**। नखैः; नखरैः, नाकस्त्रीणां; सुराङ्गनानां शच्यादीनां, करकमलसंकोचशशिभिः; करा एव कमलानि तेषा संकोचे मुकुलीभावे शशिनः चन्द्रात्मकाः पाददर्शनवेलायां नखकान्तयः चन्द्रकिरणा इव तत्करान् मुकुलयन्ति अञ्जलिसंधानं कुर्वन्ति। तरूणां; वृक्षाणां, दिव्यानां; दिवि भवानां, हसतः; तरूणां हसतः इति कर्मणि षष्ठी; हसन्तौ इव, ते; तव, चण्डि! भगवति! चरणौ फलानि स्व.स्थेभ्यः; स्वर्गस्थेभ्यः एव, न तु दरिद्रेभ्यः इति विशेषणवशात्प्रतीयते।

किसलयकराग्रेण; किसलया एव कराः तेषामग्रं तेन, ददतां; दिशतां, दरिद्रेभ्यः; दीनेभ्यश्च, भद्राम्; अमन्दं, श्रियं; लक्ष्मीम्, अनिशं; सर्वदा, अह्नाय; शीघ्रं ददतौ।

अयमर्थः—कल्पवृक्षाः किसलयकरैः स्वर्गस्थेभ्य एव आशानुसारेण शनैः शनैः फलं ददति। ते पादाम्बुजं तु स्वःस्थेभ्यो दरिद्रेभ्यश्च शीघ्रं भद्रां श्रियं ददातीति व्यतिरेकः।

अत्रेत्थं पदयोजना—हे चण्डि! किसलयकराग्रेण स्वःस्थेभ्य एव फलानि ददतां दिव्यानां तरूणां दरिद्रेभ्यः भद्रां श्रियम् अनिशमह्नाय ददतौ ते चरणौ नाकस्त्रीणां करकमलसंकोचशशिभिः नखैः हसत इव।

अत्र व्यतिरेकालंकारः स्फुट एव; स च स्वःस्थेभ्य इत्यत्र श्लेषानुप्राणित इत्यनुसंधेयम् ॥ ४८ ॥

## अरुणामोदिनी

चरणयोरिष्टार्थप्रदानप्रवणत्वमेवाह—नखैरिति। चण्डत इति चण्डी कोपना, तस्याः संबुद्धिः; हे चण्डि! भजद्भक्तजनविपद्भाजनदूरीकरणनैपुण्येनान्वर्थाभिधाने देवि! इदं च मार्कण्डेये प्रसिद्धम्। अनिशम्; निरन्तरम्, दरिद्रेभ्यः; दीनेभ्यः, भद्राम्; समृद्धाम्, समस्तकल्याणास्पदं वा, श्रियम्; पदम्, अह्नाय; शीघ्रमेव, "द्राग्झटित्यञ्जसाह्नाय" इत्यमरः। ददतौ; सर्वदा वितरन्तौ, शत्रन्तेन वर्तमानार्थकलडादेशेन सर्वेष्टार्थप्रदानप्रवणता सूच्यते। ते; भवत्याः, चरणौ; पादौ, तरुभ्यस्तज्ज्ञाविति ध्वनिः। नाकस्त्रीणाम्; सुराङ्गनानां शच्यादीनाम्, करकमलसंकोचशशिभिः; करा एव कमलानि पङ्कजानि तेषा संकोचे मुकुलने शशिभिः चन्द्रैः, देवाङ्गनाना देवीसेवावसरे अञ्जलिकरणेन करसकोचादिति भावः। नखैः; नखरैः, अतिधवलैरित्यर्थः। किसलयान्येव कराः तेषामग्रेण, स्वःस्थेभ्यः; स्वर्गस्थेभ्यः, न त्वितरलोकवासिभ्यः, सुखेन तिष्ठन्तीति स्वःस्थाः तेभ्यो धनिकेभ्यश्च। न तु दरिद्रेभ्य इत्यभिसंधिः। फलानि; मनोरथान्, ददता; वितरता, दिव्यानां; दिवि भवानां, तरूणां; कल्पवृक्षाणा, हसतः; स्मयत इव। भवच्चरणौ च अतिदरिद्रसमृद्धश्रीप्रदानपरायणौ सकललोकसर्वेष्टदानक्षमौ सन्तौ देवतानामेवेष्टार्थदानप्रवणश्रवणपथमात्रगतान् दीनजनावनविमुखान् कल्पतरून् हसत इवेत्यर्थः। कर्मणि षष्ठी। रूपकासु द्वयमनुप्राणितेयमत्र हसनोत्प्रेक्षा। तया च सकललोकसाधारण्येन इष्टार्थवितरणाशक्ताभ्या चरणाभ्यां स्वर्गवासिभ्य इव कतिपयदिनवर्तिनश्वरश्रीप्रदातॄणां कल्पतरूणा न्यूनता, तयोश्च व्यतिरेको व्यज्यते ॥ ४८ ॥

**कदा काले मातः कथय कलितालक्तकरसं**
**पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।**
**प्रकृत्या मूकानामपि च कविताकारणतया**
**कदा धत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ४९ ॥**

लक्ष्मीधरा

**कदेति** । कदा काले; जन्मप्रभृत्यवसानपर्यन्ते इति शेषः । मातः! जननि! कथय; सम्यगुपदिश, कलितालक्तकरसं; कलितम् उपदिग्धम् अलक्तकरसं लाक्षारसं यावकं वा । स्त्रीणां पादाधरोष्ठरञ्जनार्थम् अलक्तद्रवम् उपदिहन्ति सैरन्ध्र्यः । पिबेयं; प्रार्थनायां लिङ् । विद्यार्थी; विद्याः अर्थयत इति विद्यार्थी; यद्वा—अर्थः प्रयोजनमस्य अर्थी, विद्याभिः अर्थीति । अत्र **रक्षित** आह—"अर्थशब्दान्मत्वर्थे इनिप्रत्ययः" इति । अत एव "तेनार्थवान् लोभपराङ्मुखेन" इति **कालिदासेन** मतुबेव प्रयुक्तः । **माघे**—"नितान्तमर्थिनः" इति णिनिरेव । "अर्थी समर्थो विद्वान्" इत्यादावपि णिनिरेव । अत एव पूर्वव्याख्यैव समाचीना । तव; भवत्याः, चरणनिर्णेजनजलं; चरणयोः पादयोः निर्णेजनजलं पाद्योदकं, **प्रकृत्या**; स्वभावेन, **मूकानाम्**; अपिः विरोधे, चकारः शङ्काच्छेदे । **कविता-कारणतया**; कवितायाः हेतुतया, कदा धत्ते वाणीमुखकमलताम्बूलरसतां; वाण्याः सरस्वत्याः मुखकमले यस्ताम्बूलरसः, तस्य भावस्तत्ता, ताम् । अयं भावः—भगवतीपादारविन्दनिर्णेजनजलं सालक्तकं कविताहेतुः कवीश्वरस्य वदने स्थितं सरस्वतीताम्बूलरस इव प्रत्यक्षं भाति । स तु कवीश्वरः पुंभावमापन्नसरस्वतीवाभातीति ।

अत्रेत्थं पदयोजना—हे मातः! तव कलितालक्तकरसं चरणनिर्णेजनजलं विद्यार्थी अहं कदा काले पिबेयं कथय । तच्च प्रकृत्या मूकानाम् अनेडकानां वक्तुं श्रोतुम् अशिक्षितानामपि च कविताकारणतया वाणीमुखकमलताम्बूलरसतां कदा धत्ते ।

अत्रेदमनुसंधेयम्—भगवत्पादैः अनेडमूकेभ्यः लघुचर्चास्तोत्रद्वयं हस्तमस्त-कसंयोगमहिम्ना अकारि । तन्महिम्ना, भगवती पादारविन्दनिर्णेजनजलं तन्मुखे

दत्तवती । तन्निर्णेजनजलं पुनः प्रार्थयत्याचार्यः । अनेन सामीप्यमुक्तिरुदिता । तद्विशेषानुत्तरत्र विवरिष्यामः । चरणनिर्णेजनजलमिति वदता समयिमतमेवोक्तम् । कौलमते भुजगाकारेणैव देव्या अवस्थानात् चरणनिर्णेजनजलस्याभावात् सहस्रकमल एव चरणनिर्णेजनजलमिति पूर्वमेव बहुधा प्रपञ्चितम् । अत एव—

‘ सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिंचन्ती पुनरपि रसाम्नाय महसः ।’

इतीदमर्धं समयमतप्रतिपादकम् ।

‘ अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ।’

इतीदमर्धं कौलमतप्रतिपादकमिति विवेकः ।

अत्रोत्प्रेक्षालंकारः ; चरणनिर्णेजनालक्तकरसस्य सरस्वतीताम्बूलरसत्वेनाध्यवसानात् । समयिनः साक्षात्सरस्वतीस्वरूपत्वेनाध्यवसानाच्च उत्प्रेक्षातिशयोक्त्योः संकरः ॥ ४९ ॥

## अरुणामोदिनी

एवं पादयोर्महिमानं प्रकटय्य तत्क्षालनजलमाहात्म्यप्रकटनापूर्वकमात्मनः पादावनेजनजलपानं देव्यनुग्रहलब्धं प्रार्थयते—कदेति । हे मातः ! भक्तजनवत्सले ! जननि ! विद्यार्थी ; विद्याः चतुर्दश अष्टादश चतुःषष्टिर्वा विद्याः । अथ वा विद्या ज्ञानम्, अर्थते याचित इत्यर्थी, समस्तवेदशास्त्रादिविद्याप्रौढिमाभिलाषी ज्ञानार्थी वा अहम्, कलितालक्तकरसम् ; कलितो मिश्रितः अलक्तकरसो लाक्षारसो यस्मिन् तत्, पादे निरन्तरं लाक्षरञ्जनविरहाभावादिति भावः । तव मूकानामपि ; मुखरीकरणचतुराया भवत्याः, चरणनिर्णेजनजलम् ; पादप्रक्षालनोदकम् । कदा काले ; कस्मिन् वा काले, “ तदो दा च ” “ दानीं च ” इति दाप्रत्ययः । पिबेयम् पास्यामि । संप्रश्ने प्रार्थनायां वा लिङ् । कथय ; वद । कदा वा भवदावैः संतप्ते दीनेऽनुग्रहं विधाय चरणौ दर्शयिष्येते । कदा वा लाक्षारसाङ्कितौ पादौ प्रक्षाल्य यावकरसमिश्रितं तत्पयः पास्यामि । अयं मनोरथः कदा सिद्ध्येत् वदेत्यर्थः ।

तन्महिमानमाह—प्रकृत्येति । यच्चरणनिर्णेजनजलं प्रकृत्या स्वभावेनैव, मूकानाम्; कालत्रयेऽप्यभिवदनाशक्तानामपि जनानाम्, किमुतान्येषामित्यर्थः । कविताकारणतया; कवितालतोत्पत्तिहेतुतया, वाणीमुखकमलताम्बूलरसतां; सरस्वतीवदननलिनसंस्थित-वीटिकाद्रवरूपत्वम्, आधत्ते भजते । कालिदासादयो महाकवयः सरस्वतीमुखकमल-स्थताम्बूलभोजनेन महाकवयो बभूवुरिति प्रसिद्धिः । भवत्पादनिर्णेजनपाथोऽपि पादार्जितलाक्षारसाङ्कितया भारतीमुखकमलस्थवीटीरूपं सत्कविताहेतुरेव भवति । तत्पा-.... लक्षः कदा मम भविष्यतीति भावः । अत्र कदा पिबेयमिति चिन्ताख्यस्य भावस्यो-क्तिप्रतिबन्धात् प्रेयोऽलंकारः । स चोत्तरार्धस्थितवाक्यार्थहेतुककाव्यलिङ्गानुप्राणितः । तेन देवीपादपाथसः सकलविद्यानैपुण्यप्रदत्वं वस्तु व्यज्यत इत्यलकारेण वस्तुध्वनिः ॥ ४९ ॥

**पदन्यासक्रीडापरिचयमिवारब्धुमनसः**
**स्खलन्तस्ते खेलं भवनकलहंसा न जहति ।**
**अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित-**
**च्छलादाचक्षाणं चरणकमलं चारुचरिते ॥ ५० ॥**

लक्ष्मीधरा

**पदन्यासेति** । पदन्यासक्रीडापरिचयं; पदयोर्न्यासः पदन्यासः, तस्मिन् क्रीडा विनोदः, तस्य परिचयमिव अभ्यासमिव । इवशब्दः संभावनावचनः, नूनमित्यर्थः । आरब्धुमनसः; संपादयितुकामाः, स्खलन्तः; स्खलद्गतयः, ते; तव, खेलं; खेलनं, विलासं संचारं, भवनकलहंसाः; भवने परिपोषिताः कलहंसाः हंसविशेषाः, न जहति; न परित्यजन्ति, त्वदनुसरणं न कदाचिदपि त्यजन्तीत्यर्थः । अतः; कारणात्, तेषां; कलहंसानां, शिक्षां; खेलनशिक्षां, सुभगमणिमञ्जीररणितच्छलात्; मणिमञ्जीरो मणिप्रधाननूपुरः स चासौ सुभगः रम्यतरः । यद्वा—सुभगैः मणिभिः पद्मरागादिभिः युक्तः तस्य मञ्जीरस्य रणितानां शिञ्जितानां छलात् व्याजात्, आचक्षाणम्; उपदिशत्; चरणकमलं; पादाम्बुजं, चारुचरिते; शोभनगमने! ।

अत्रेत्थं पदयोजना—हे चारुचरिते! पदन्यासक्रीडापरिचयम् आरब्धुमनसः भवनकलहंसाः स्खलन्तः ते खेलं न जहति; अतः चरणकमलं सुभगमणिमञ्जीररणि-तच्छलात् तेषां शिक्षाम् आचक्षाणमिव ।

अत्रोत्प्रेक्षालंकारः; मञ्जीररणितानां शिक्षावचनात्मतया संभावनात्। पूर्वार्धे अतिशयोक्तिः; भवनकलहंसानां स्वाभाविके पोषकजनानुसरणे पदन्यासक्रीडापरिचयार्थत्वेन अध्यवसानात् असंबन्धे संबन्धनिबन्धनातिशयोक्तिः, उभयोरङ्गाङ्गिभावेन संकरः ॥ ५० ॥

## अरुणामोदिनी

एवं पादाम्बूपवर्ण्य तद्गतिवर्णनापूर्वकमागमार्थं सूचयति—**पदन्यासे**ति। चारुचरिते; चारु सुन्दरं चरितं संचारो गमनं चरित्रं वा यस्याः सा चारुचरिता, तस्याः संबुद्धिः, हे **चारुचरिते**! सुन्दरलीलागमने देवि, "चरितं तु पवित्रे स्यात्संचारे व्रतकर्मणि" इति विश्वः। भवनकलहंसाः; भवने गृहे स्थिताः कलहंसाः गृहपोषिता राजहंसाः, "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः। यत इति शेषः। यतः कारणात्, ते; भवत्याः पदन्यासक्रीडापरिचयम्; पदयोः न्यासो विन्यासः, तस्य क्रीडायां परिचयम् अभ्यासम् आलब्धुं प्राप्तुं मनो येषा ते; आलब्धुमनसः; भवदीयपदपङ्कजविलासाभ्यासमाकाङ्क्षन्त इवेत्यर्थः। अत्र यद्यपि "आलम्भनं विशसनम्" इत्यमरात्, 'पशुमालभेत पश्वालाभः,' "तदा पदावालभसे मघोनः" इत्याद्यामरपदोऽभियुक्तश्रीहर्षप्रयोगात् लोकवेदयोः आङ्पूर्वोऽयं लभिधातुर्हिंसावचनः। तथापि;

> "निपाताश्चोपसर्गाश्च धातोश्चेति ते त्रयः।
> अनेकार्थाः स्मृतास्तज्ज्ञैः पाठस्तेषां निदर्शनम्॥"

इति **वचनात्** धातूनामनेकार्थत्वाङ्गीकारात् प्राप्त्यर्थकत्वं युक्तम्। लभेरनेकार्थत्वं श्रीहर्षस्याभिमतं च, "काचित्समालब्धुमसंवृतोरुम्" इति तत्प्रयोगात्। यद्वा—समारब्धुमित्येव पाठः, समारब्धुं कर्तुं मनो येषामित्यर्थः। "तुं काममनसोरपि" इति मकारलोपः। खेलम् विलासं यथा तथा स्खलन्तः संचरन्तः पदयुगलं न जहति। अथ वा स्खलन्तः संचारमाणाः खेलं गतिं न जहाति; न त्यजन्ति। भवदीयपदाम्बुजगमनाभ्यासाभिलाषयैव लीलागमनं कुर्वन्तीत्यर्थः। "अदभ्यस्तात्" इति त्सेरदादेशः। अतः कारणात् **चरणकमलम्**; भवत्पादपद्मम्। चरणयुगलमिति क्वचित्पाठः। सुभगः सुन्दरः मणिमयो यो मञ्जीरो नूपुरः, "मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः। तस्य रणितस्य छलात् क्वणनव्याजात् तेषामनुसरतां हंसानां शिक्षा गतेषु अभ्यासपाटवमाचक्षाणमुपदिशत् वर्तत इति शेषः। मञ्जीररणितव्याजेन तेषां गमनान्यभ्यासयन्तीत्यर्थः।

आगमार्थस्तु—भवने श्रीचक्राख्ये गृहे वर्तमानाः कलहंसा', कलोऽव्यक्तमधुरः कण्ठे वर्तमानो हसेति मन्त्रो येषा ते, कलहंसाः पञ्चाशद्भेदभिन्नाः गणप्रवराः चक्रेश्वरगणपति कमलनाथ-द्वीपनाथ-वसन्तादयः श्रीचक्राधिष्ठानदेवता उच्यन्ते । ताश्च रामकविव्याख्याने विस्तरेणोक्ता द्रष्टव्याः । पदन्यासक्रीडापरिचयम्; पदानि चतुर्दश भुवनानि स्थानानि, तेषा न्यासः सृष्टिः, क्रीडा रक्षणं, परिचयः संहारः, "चिञ् चयने" इति धातोः संहारस्याप्यर्थत्वात् सर्वेषा द्वन्द्वे सत्येकवद्भावः । "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इति शास्त्रात् । आलब्धुमनसः; प्राप्तुमिच्छन्तः, तेषां भुवनसृष्ट्यादिकारणसामार्थ्यमाशासाना इति भावः । खे चिदाकाशे अलमत्यन्तं स्खलन्तः चरन्तः सन्तः ते त्वदीयं चरणकमलं न जहति । अतो हेतोः तेषा हंसानां सुभगः शोभना कीर्तिः अविद्यामुक्तत्वादिति कामेश्वरः । मणिवत्प्रकाशत इति मणिः सुभगमणिः निष्कलो ब्रह्म, मञ्जु मृदुलः ईरः समीरणः हंसः सोऽहमिति निरन्तरजपो यस्य सः मञ्जीरः, अविद्यासंवलितो जीवः, तद्विषयं यद्भणितं, व्याख्यातम् । तस्य छलात् मिषात् तव चरणकमलं शिक्षामाचक्षाणं चक्षणशीलं, तत्प्रकाशकमित्यर्थः । अत्र निरन्तरसंचरिष्णुपदविन्यासक्रीडाभ्यसनशीलमुत्प्रेक्ष्यते । स चोत्तरार्धोक्तच्छलादिशब्दै-रसत्यत्वप्रतिपादनरूपापह्नवसहितोत्प्रेक्षाहेतुरिति द्वयोः संकरः । तया च विद्याभ्यसनाय नैरन्तर्येण गुरुपादपङ्कजसेविशिष्यवृत्तान्तप्रतीतेरलंकारेणालंकारध्वनिः ॥ ९० ॥

**ददाने दीनेभ्यः श्रियमनिशमाशानुसदृशी-**
**ममन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।**
**तवास्मिन् मन्दारस्तबकसुभगे यातु चरणे**
**निमज्जन् मज्जीवः करणचरणः षट्चरणताम् ॥ ९१ ॥**

### लक्ष्मीधरा

**ददाने** इति । ददाने; ददति, दीनेभ्यः; दरिद्रेभ्यः, श्रियं; लक्ष्मीम्, अनिशम् आशानुसदृशीं; वाञ्छानुरूपाम्, अमन्दम्; अधिकम्, सौन्दर्य-प्रकरमकरन्दं; सौन्दर्यस्य लावण्यस्य प्रकरः समूह एव मकरन्दः पुष्परसः तं विकिरति, तव; भवत्याः, अस्मिन्; दृश्यमाने, मन्दारस्तबकसुभगे; कल्पवृक्षगुच्छसौभाग्यवति, यातु; प्राप्नुयात् । चरणे; पादाब्जे, निमज्जन्; नितरां मज्जनं कुर्वन्, मज्जीवः;

अहं चासौ जीवश्च मज्जीवः, करणचरणः; करणानि पञ्चेन्द्रियाणि, मनःषष्ठानि तान्येव चरणा यस्य सः, तस्य भावः, षट्चरणतां; भ्रमरत्वम् ।

अत्रेत्थं पदयोजना—हे भगवति! दीनेभ्यः आशानुसदृशीं श्रियम् अनिशं ददाने अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति मन्दारस्तबकसुभगे अस्मिन् तव चरणे करणचरणः मज्जीवः निमज्जन् षट्चरणतां यातु ।

अत्रातिशयोक्तिरलंकारः; चरणस्य कमलत्वेन निगीर्याध्यवसायात् । मन्दारस्तबकसुभग इत्यत्र उपमालंकारः, अनयोः संसृष्टिः । करणचरण इत्यत्र रूपकम्, करणानां चरणत्वेन रूपणात्; मज्जीवः षट्चरणतां यात्वित्यत्र परिणामालंकारः स्पष्टः; अनयोरङ्गाङ्गिभावेन संकरः । सौन्दर्यप्रकरमकरन्दं विकिरतीत्यत्र रूपकं निगीर्याध्यवसाने निमित्तम् । अत एव नैकदेशरूपकम्, अवयवानां प्रतिपादनात् । करणचरणः षट्चरणतां यात्विति फलत्वेनोद्देशात् अवयवत्वं तस्य । अतोऽस्मिन् चरण इति आरोपविषयतया चरणमुपादाय कमलमारोप्यमाणबुद्ध्या निगीर्णमिति सम्यक् । एवं परिणामातिशययोः संकर एव, न तु संसृष्टिरिति ध्येयम् ॥ ५१ ॥

## अरुणामोदिनी

एवं चरणावुपवर्ण्य तत्रात्ममनसोऽनवरतासक्ति प्रार्थ्यते—**ददान** इति । हे देवि! **अनिशम्**; निरन्तरम्, **दीनेभ्यः**; दरिद्रेभ्यः, **आशानुसदृशीम्**; वाञ्छानुरूपिणीम्, **श्रियम्**; ऐश्वर्यम्, **ददाने**; वितरति, भक्तजनसंपन्नतमीकरणपरायण इत्यर्थः । किं च **अमन्दम्**; अधिकं यथा तथा सौन्दर्यप्रकर एव मकरन्दः पुष्परसः, तं विकिरति विक्षिपति। मन्दारेऽपि दीनवाञ्छानुसरणं सौन्दर्यप्रकरस्य मकरन्दस्य च विक्षेपः प्रसिद्ध एव । मन्दारस्य पारिजाततरोः स्तबको गुच्छः, तद्वत् सुभगे, सुन्दरे सर्वाभीष्टप्रदत्वसौन्दर्याभ्यामिति भावः । तव; भवत्याः, अस्मिन्; पूर्वोक्तगुणे मदनुग्रहाय पुनः प्रसारिते चरणे पादपङ्कजे भवदधिष्ठानभूतसंविच्चरणसंविच्चक्रे चेति ध्वनिः । निमज्जन्; मग्नः सन्, मज्जीवः; ममात्मनो जीवः जीवात्मा । यद्वा—अहं चासौ जीवश्च मज्जीवः । **करणचरणः**; करणानि मनःषष्ठानीन्द्रियाण्येव चरणाः पादाः यस्य सः, करणचरणः षडिन्द्रियैरेव षट्पदैः सहित इत्यर्थः । षट्चरणताम्; षडङ्घ्रितां भृङ्गायमानत्वं यातु प्राप्नोतु, निरन्तरं भवत्पादाम्बुज एव सक्तो भूयादित्यर्थः । अत्रारोप्यमाणस्य षट्चरणत्वस्य देवीचरणावस्थितेः प्रकृतस्योपयोगात् परिणामालंकारः । स च सौन्दर्यप्रकरेत्यादिरूपकानुप्राणितः ॥ ९१ ॥

**अराला केशेषु प्रकृतिसरला मन्दहसिते**
**शिरीषाभा चित्ते[1] दृषदुपलशोभा कुचतटे ।**
**भृशं तन्वी मध्ये [2]पृथुरुरसिजारोहविषये**
**जगत्त्रातुं शंभोर्जयति करुणा काचिदरुणा ॥ ५२ ॥**

लक्ष्मीधरा

**अरालेति** । अराला; वक्रा, केशेषु, नान्यत्रेत्यर्थः । प्रकृतिसरला; प्रकृत्या स्वभावेन सरला ऋज्वी, मन्दहसिते; मन्दस्मिते, शिरीषाभा; शिरीषकुसुमाभा, अतिमृद्वीत्यर्थः । चित्ते; अन्तःकरणे, दृषदुपलशोभा; दृषदि य उपलः पेषणिका दृषदुपल इति पूर्वमेवोक्तं तस्येव शोभा यस्याः सा, कुचतटे; स्तनतटे, भृशम्; अत्यर्थं, तन्वी; कृशा, मध्ये; वलग्ने, पृथुः; स्थूला, उरसिजारोहविषये; स्तनविषये नितम्बविषये च, विषयशब्दः स्थलवाची । जगत्; प्रपञ्चं, त्रातुं, रक्षितुं, शंभोः; सदाशिवस्य, जयति; अहमेवेति स्फुरतीत्यर्थः । करुणा; कृपात्मिका, काचित् अनिर्वाच्या, अरुणा; अरुणाख्या शक्तिः, यद्वा—अरुणवर्णा काचित् करुणा कृपा करुणाया आरुण्यारोपात् मूर्ता करुणेव भातीति वाक्यार्थः । अरुणाख्या शक्तिरर्थादवगता ।

अत्रेत्थं पदयोजना—शंभोः काचित् केशेषु अराला मन्दहसिते प्रकृतिसरला चित्ते शिरीषाभा कुचतटे दृषदुपलशोभा मध्ये भृशं तन्वी उरसिजारोहविषये पृथुः अरुणा करुणा जगत् त्रातुं जयति ।

अत्र कामेश्वर्याः अरुणाकरुणाशब्दाभ्यां निगीर्याध्यवसानात् अतिशयोक्तिः ॥ ५२ ॥

अरुणामोदिनी

एवमेकपञ्चाशच्छ्लोकैः भगवत्याः किरीटादिपादान्तं वर्णितं विस्तरेण । यद्यपि "मौलितो मानवा वर्ण्या देवाश्चरणतः पुनः" इति काव्यकल्पलतायां

[1] गात्रे इत्यरुणामोदिनी.    [2] पृथुरिव वरारोह० इत्यरुणामोदिनी.

वर्णनानियमात् किरीटादिपादान्तवर्णनस्य विरोध एव प्रतिभाति, तथापि सहस्रनामसु किरीटादिपादान्तवर्णनस्य प्रसिद्धत्वात् न विरोधः। अथ तत्स्वरूपम्; "इषुभिः पञ्चभिर्धनुषा च विद्धत्यादिशक्तिरुणा विश्वजन्या" इति श्रुतिप्रसिद्ध प्रबन्धप्रतिपाद्यं निरूपयति—**अरालेति**। **केशेषु**; शिरोरुहेषु, **अराला**; कुटिला, नान्यत्रेत्यभिप्रायः। "अरालं वृजिनं जिह्मम्" इत्यमरः। गम्यमानस्यैवाप्रयोगः। तथा **मन्दहसिते**; स्मिते, **प्रकृतिसरला**; प्रकृत्या स्वभावेनैव सरला ऋजुः। तथा **गात्रे शिरीषाभा**; शिरीषस्य आभेवाभा यस्याः सा, शिरीषपुष्पवन्मृदुलशरीरेत्यर्थः। चित्त इति पाठे मृदुलचित्तेत्यर्थः। तथा **कुचतटे दृषदुपलशोभा**; दृषदुपलस्य पेषणीशिलायाः शोभा यस्याः सा, उपलवत् प्रकाशमान कुचतटेत्यर्थः। तथा **मध्ये**; वलग्ने, **भृशम्**; अत्यन्तम्, **तन्वी**; कृशा। तथा **वरारोहविषये**; श्रेष्ठनितम्बप्रदेशे, **पृथुः**; प्रथिष्ठा। एवंविधा **काचित्** उद्यदादित्यरक्तत्वात् **अरुणा** इति प्रसिद्धा शक्तिः, **शंभोः**; परमेश्वरस्य, **करुणा** दयैव **जगत् त्रातुम्** रक्षितुं, जयति; वर्तते। समस्तजगद्रक्षणपरायणस्य परमेश्वरस्य करुणैव अरुणाख्या शक्तिः शक्तिशक्तिमतोरभेदादिति तयोरैक्यद्योतनायैवकारप्रयोग इत्यवधेयम्। वस्तुतः शिवाभिन्नायाः चिच्छक्तेर्मूर्तिधारणस्य जगद्रक्षणार्थत्वादेवंविधा देवी मह्यं प्रसन्ना भूयादिति तात्पर्यार्थः॥ ९२॥

**पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः**
**सपर्यामर्यादा तरलकरणानामसुलभा।**
**तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां**
**तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः॥ ९३॥**

लक्ष्मीधरा

**पुरारातेरिति**। पुरारातेः; पुरान्तकस्य, अन्तःपुरं; अवरोधः, पट्टमहिषीति **यावत्**। असि, भवसि। ततः; तस्मात्कारणात्, त्वच्चरणयोः; तव; पादयोः, सपर्यामर्यादा; पूजाप्रकारः, तरलकरणानां; चञ्चलचित्तानाम्, असुलभा; दुर्लभा। "अन्तःपुरप्रवेशः चञ्चलचित्तानां नास्तीति प्रसिद्धम्। अतो निश्चलचित्तैस्तु सौविदल्लैः प्रवेष्टव्यम्" इति **नीतिवाक्यामृते**। निर्मलचित्तैरेव सुधाम्बोधिमध्यस्थितायाः पादाम्बुजसेवा समयिभिरेव ज्ञायते, नान्यैरित्यर्थः। तथा हि; प्रसिद्धौ, एते

नीताः शतमखमुखाः; इन्द्रमुख्याः सुरगणाः, सिद्धिं; संसिद्धिम्, अतुलाम्, असदृशीम्, तव; भवत्याः, द्वारोपान्तस्थितिभिः; द्वारसमीपे स्थितयो यासां ताभिः, अणिमाद्याभिः; अणिमाप्रमुखाभिः सिद्धिभिः सह, अमराः; निर्जराः।

अत्रेत्थं पदयोजना—हे भगवति! पुरारातेरन्तःपुरमसि। ततः त्वच्चरणयोः सपर्यामर्यादा तरलकरणानामसुलभा। तथा हि—एते शतमखमुखाः अमराः तव द्वारोपान्तस्थितिभिः, अणिमाद्याभिः सह अतुलां सिद्धिं नीताः। यथा तव द्वारोपान्तमेव अणिमादिसिद्धयः सेवन्ते, एवमिन्द्रादयोऽपि। इयांस्तु विशेषः—अणिमाद्यष्टसिद्धीनां द्वारपालकत्वेन सर्वदा तव वासः स्वभावसिद्धः। इन्द्रादीनां तु तरलकरणत्वात् अन्तःपुरप्रवेशानर्हत्वात् दौवारिकानुमत्या द्वारदेशेऽप्यवस्थानं सिद्धिशब्दार्थ इति तात्पर्यम्॥ ५३॥

## अरुणामोदिनी

उक्ताया देव्या अभीष्टार्थदातृत्वं भजतां प्रकटयति—**पुरारातेरिति**। हे देवि! त्व **पुरारातेः**; त्रिपुरान्तकस्य, न कस्यचित् साधुजनस्येति दुरागध्यत्वम्। अन्तःपुरम्; अवरोधः, पट्टमहिषीत्यर्थः। असि; अभूः। राजदाराणामसूर्यपश्यत्वात् भवत्याश्चान्तः-पुराङ्गनात्वात् तत्रापि रुद्रमहिषीत्वात् भजज्जनविज्ञापनावकाशो नास्तीत्यभिप्रायः। अतः कारणात्, **त्वच्चरणयोः**; भवत्पादयोः, अमर्यादा; अपरिमिता, सपर्या; पूजा, तरल-करणानाम्; चलितेन्द्रियाणाम्, इन्द्रियनिग्रहरहितानाम्। असुलभा; दुर्लभा, चलचित्ताः परमशिवमहिषीं त्वा पूजयितुं न शक्नुवन्तीत्यर्थः। अथ वा, हे देवि! पुरारातेः त्वदीयसामर्थ्यात् त्रिपुरसंहारकीर्तिमतो रुद्रस्यान्तरभ्यन्तरे वर्तमानं देहाभ्यन्तरे स्थितं पुरं शरीरमसि अभूः। तत्सामर्थ्यरूपत्वादिति। अतः त्वच्चरणयोः अमर्यादा सपर्या तरलकरणाना मनोनिग्रहराहित्येन ध्यानविधानाशक्तानाम् असुलभा सुलभा न भवति। किं तु अकारवाच्यैः ब्रह्मादिभिरेव सुलभेत्यर्थः। उक्तमर्थं समाधत्ते—**तथा हीति**। उक्तमेवैतत्। शतमखमुखाः एते; अमराः, तव; भवत्याः, द्वारोपान्तस्थितिभिः; द्वारोपान्ते स्थितिर्यासां ताभिः, अणिमाद्याभिः; अणिमा आदिर्यासां ताभिः, अणिमामहिमाप्रभृतिभिः पूर्वोक्ताभिः दशभिः सह, "वृद्धो यूना" इति ज्ञापकात् सहप्रयोगे तृतीया। **अतुला सिद्धिं नीताः**; निरुपमा योगसिद्धिं प्रापिताः। इन्द्रादीनां भवत्प्रसादासादितवैभवत्वेऽपि उर्वश्यादि-वेश्यासंभोगरसिकतया तरलेन्द्रियत्वात् अन्तःपुरप्रवेशानर्हत्वेन सर्वचक्रबाह्यचतुरश्र-वर्त्यणिमादिसिद्धीनामिव दौवारिकतया द्वारोपान्त एव निवासो निर्दिष्ट इति भावः।

अथ वा अणिमाद्याभिरिति सहार्थयोजनाभावे अणिमादिभिः सिद्धिम् इन्द्रादयो नीता इत्यर्थः । लोभिजनवञ्चकत्वेन नानामायाविलासमूलत्वात् सर्वसाधारणगणिकाप्रायत्वात् बाह्यचतुरश्रवर्त्यणिमादिगुणावेष्टिता इन्द्रादयः कृता इत्यर्थः ॥ ९३ ॥

एवं मकुटादिपादान्तं वर्णयित्वा पुनः स्वरूपं प्रस्तौति—

**गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः**
**शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।**
**त्वदीयानां भासां प्रतिफलनरागारुणतया**
**शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥ ९४ ॥**

लक्ष्मीधरा

**गता** इति । गताः; प्राप्ताः, ते; तव, मञ्चत्वं; खट्वारूपं, द्रुहिण-हरिद्रेश्वरभृतः; द्रुहिणो ब्रह्मा, हरिर्विष्णुः, रुद्रः ईश्वरः, एते अधिकारपुरुषाः महेश्वरतत्त्वान्तर्गताः ते च ते भृतश्च; क्लीबन्तोऽयं शब्दः बहुवचनान्तः । भृतो भृतकाः विशेषणसमासः । तेषां कामरूपाणाम् अत्यन्तसंनिकृष्टे सेवार्थं मञ्चस्य पादचतुष्टयरूपता युज्यत एव । शिवः; शिवशब्दो व्याख्यातः । शिवतत्त्वम् अधिकारपुरुष एव । यद्वा—सदाशिवतत्त्वम् । स्वच्छच्छायाघटितकपटप्रच्छदपटः; स्वच्छा चासौ छाया सैव घटितः कपटप्रच्छदपटः शुभ्रकान्तिरेव वस्त्रात्मना अवस्थितेत्यर्थः । त्वदीयानां; भवत्संबन्धिनीनां, भासां; कान्तीनां, प्रतिफलन-रागारुणतया; प्रतिफलनेन यो रागः रक्तिमा संक्रान्तः, तेनारुणो रक्तवर्णः, तस्य भावस्तत्ता तया, शरीरी; मूर्तः, शृङ्गारः; शृङ्गाराख्यो रस इव । शृङ्गाररसः रक्तवर्ण इति महाकविप्रसिद्धिः । इवशब्दः संभावनायाम् । दृशां; भवद्वीक्षणानां, दोग्धि; दुग्धे प्रसूते करोतीति यावत्, कुतुकम्; आनन्दम् ॥

अत्रेत्थं पदयोजना—हे भगवति! ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः गताः, शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः सन् त्वदीयानां भासां प्रतिफलनरागा-रुणतया शरीरी शृङ्गारो रस इव दृशां कुतुकं दोग्धि ।

अत्रेदमनुसंधेयम्—आधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञाचक्रात्मकं षट्चक्रसदनं पृथिव्यग्निजलवायुगगनमनस्तत्त्वाधिष्ठानम् एकादशेन्द्रियाधिष्ठानं च। एवम् आज्ञाचक्रान्ते एकविंशतितत्त्वान्यधिष्ठितानि तदात्मना अवस्थितानि। तत उपरि मायाशुद्धविद्यामहेश्वरसदाशिवात्मकतत्त्वचतुष्टयं ब्रह्मग्रन्थ्यनन्तरभाविचतुर्द्वारात्मकभूपुरत्रितयात्मकश्रीचक्रद्वारचतुष्टये स्थितम्। प्रागादिद्वारदेशेषु मायादीनि चत्वारि तत्त्वानि। तान्येव मञ्चस्य चतुष्पादानि। शुद्धविद्यायाः सदाशिवतत्त्वाभिनिवेशात् तच्छायापत्त्या सहस्रकमलान्तर्गतशिवः सदाशिवात्मा अनुरागवशात् शुद्धविद्यायाः संवलनात् तादात्म्यं प्रतीयते। सहस्रकमलान्तस्थितस्य चतुर्द्वारात्मकस्य कर्णिकारूपस्य श्रीचक्रस्य मध्यवर्तिचतुरश्रात्मकबैन्दवापरपर्यायसरघाशब्दवाच्यत्वसुधासिन्धौ शिवशक्त्योर्मेलनमिति। अवशिष्टं सर्वं, 'सुधासिन्धोर्मध्ये' इति श्लोकव्याख्यानावसरे कथितम्।

अत्र तद्गुणालंकारानुप्राणित उत्प्रेक्षालंकारः; शिवस्यातिधवलस्य कामेश्वरीतनुकान्त्या ताद्गुण्यात् शरीरी शृङ्गारो रस इवेत्युत्प्रेक्षणादिति ॥ ५४ ॥

## अरुणामोदिनी

एवं देवीस्वरूपं, तस्या यथाधिकारमिष्टार्थवितरणं चोपवर्ण्य देवयोरैक्यवर्णनापूर्वकं नित्यशृङ्गारित्वं वर्णयति—गता इति। हे मातः! द्रुहिणहरिरुद्रेश्वरभृतः; ब्रह्मविष्णुरुद्रमहेश्वराः कारणपुरुषाः, त एव बिभ्रतीति भृतः भृतकः क्विप्। ते मञ्चत्वम्; मञ्चभावं, गताः; प्राप्ताः। ब्रह्मादयश्चत्वारः चतुष्पदीभूय भवत्या अत्यन्तसंनिकृष्टोपासनार्थं खट्वारूपं प्राप्ता इत्यर्थः। ब्रह्मादीनां भृतकभावापत्तिरागमेषु प्रसिद्धा; प्रकाशिता च पूर्वमेवास्माभिः। उक्तं च सहस्रनामसु, "पञ्चप्रेतासनारूढा परब्रह्मस्वरूपिणी"[1] इति। किं च, स्वच्छच्छायाघटितकपटप्रच्छदपटः; स्वच्छया निर्मलया छायया धवलकान्त्या घटितः कपटरूपः मायारूपः प्रच्छदपटः कशिपुः तदुपरिस्थवस्त्रं वा येन सः। "कशिपुश्च सदाशिवः" इति वचनात्। कशिपूकृतस्वदेहकान्त्या कल्पितोपरिवस्त्र इत्यर्थः। "निचोलः प्रच्छदपटः" इत्यमरः। शिवः; सदाशिवः भवत्पतिः, त्वदीयानाम्; भवदीयानाम्, भासाम्; अरुणाकान्तिप्रतिफलनेन प्रतिबिम्बेन यो रागः, तेन अरुणतया; आरुण्यवर्णत्वेन स्फटिके आरुण्यसंक्रान्तिदर्शनादित्यर्थः। त्वदीयानां

[1] पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी इति मुद्रितकोशपाठः.

दृशाम्; नेत्राणाम्, शरीरी; मूर्तिमान्, शृङ्गारो रस इव; शृङ्गारो रक्तवर्ण इति कविसमयप्रसिद्धिः। कौतुकम्; कौतूहल, दोग्धि; आनन्दं जनयतीत्यर्थः। अत्रोक्त रुद्रयामले—

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
एते पञ्च महाप्रेता भूताधिपतयो मताः॥
चत्वारो मञ्चचरणाः पञ्चमः प्रच्छदः पट.।
साक्षी प्रकाशरूपेण शिवेनाभिन्नविग्रहः॥
तत्रासने समासीना निर्भरानन्दरूपिणी।"

इति। अत्र भाविकालंकारानुप्राणितोत्प्रेक्षालङ्कारः॥ ९४॥

**कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं**
**कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम्।**
**अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं**
**विधिर्भूयोभूयो निबिडयति नूनं तव कृते॥ ९५॥**

लक्ष्मीधरा

**कलङ्क** इति। कलङ्कः; लाञ्छनं, कस्तूरी; मृगनाभिः, रजनिकरबिम्बं; चन्द्रबिम्बं, जलमयम्, स्वार्थे मयट्, पन्नीरमित्यर्थः। कलाभिः; कलात्मकैः, कर्पूरैः सह मरकतकरण्डं; मरकतमणिना रचितम्। मरकतशब्दो वर्णव्यत्ययेन मकरशब्दादुत्पन्नः मकरात् मकरतः, "मकरवक्त्राज्जातं मरकतम्" इति **भोजराजः**। करण्डं; निबिडितम्, अन्तःस्फुरितम्। अतः त्वद्भोगेन; तव देव्याः उपभोगेन अनुभवेन कस्तूरीपन्नीरकर्पूराणाम् अनुभवेव, प्रतिदिनं; दिनेदिने, इदं परिदृश्यमानमिन्दुमण्डलं रिक्तकुहरं; शून्यान्तरं, विधिः ब्रह्मा, भूयोभूयः; प्रतिदिनं, निबिडयति; पूरयति, नूनं तव कृते तुभ्यमित्यर्थः। "अर्थे कृते च तादर्थ्ये निपातद्वयमीरितम्" इति कृतेशब्दः तादर्थ्ये निपातितः। तद्योगे षष्ठ्येव।

अत्रेत्थं पदयोजना—हे भगवति! कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं कलाभिः कर्पूरैः निविडितं मरकतकरण्डम्। अतः इदं प्रतिदिनं त्वद्भोगेन रिक्तकुहरं विधिः भूयोभूयः तव कृते निबिडयति नूनम्।

अत्रातिशयोक्तिरलंकारः; मरकतकरण्डेन चन्द्रमण्डलस्याध्यवसानात् । यद्वा—अपह्नवालंकारः; अयं कलङ्को न भवति, अपि तु कस्तूरी; इदं रजनिकर-बिम्बं न भवति, किंतु बहिःप्रतिफलितमन्तर्गतं पन्नीरम्; इमाः कलाः न भवन्ति, अपि तु कर्पूररजः; इदमिन्दुमण्डलम् अन्तःस्थितद्रव्यप्रतिफलनवशाद् पीतवर्णं प्रतीयते, वस्तुतस्तु श्वेतवर्णमेवेत्याद्यवस्थापह्नवमालायाः प्रतीतेः ! उत्प्रेक्षालंकारश्च; प्रतीपदादिदिनेषु वृद्धिक्षयवतः चन्द्रमसः कस्तूर्यादिद्रव्यव्ययप्रवेशाभ्याम् ईषद्रक्तत्व-संपूर्णत्वयोः संभावनात् । अतः अनयोरनुसृष्टिः अङ्गाङ्गिभावेन पृथक्स्थित्या अवस्थानात् ॥ ५५ ॥

## अरुणामोदिनी

एवं पूर्वोक्तं मञ्चमधिरुह्य निर्भरानन्दनन्दिताया देव्याश्चन्द्रमण्डलं भोगसाधन-संपूर्णकरण्डत्वेनाह—कलङ्क इति । हे देवि! जलमयम्; जलरूपम्, स्वार्थे मयट् । अमृतपन्नीरसहितमित्यर्थः । रजनिकरबिम्बम्; परिदृश्यमानं चन्द्रमण्डलम्, कलाभिरेव कर्पूरैः निबिडितम् पूरितं; मरकतकरण्डम्; मरकतमणिनिर्मितः पन्नीरकर्पूरादिभोगसाधन-स्थानम्, मण्डलाकारः पेटीविशेषः । तत्र स्थितः कलङ्कः कस्तूरी नीलवर्णत्वात् । अयमाशयः—भगवत्याः सर्वजगत्कारणत्वं ब्रुवतामाचार्याणां समस्तभोगानुभवसमवहि-ताया देव्याः ब्रह्माण्डस्य गृहरूपत्वेन, ऊर्ध्वाङ्गस्य वितानरूपत्वेन, मेर्वादीनां विहारस्थानरूपत्वेन; नक्षत्राणां हारावलित्वेन, गोत्रभिदादीना पौत्रत्वेन, ब्रह्मादीनां पुत्रत्वेन, मार्तण्डस्य गृहदीपत्वेन च तात्पर्यात् सकलजगत्प्रकाशकचन्द्रोऽपि संभोगाङ्गसुगन्धिवस्तुस्थापनकरण्डः, तत्र कलङ्क एव मृगनाभिः, जलमेव पन्नीरम्, कलाः कर्पूरखण्डा इत्यर्थः । कलङ्कसंबन्धात् मरकतरूपणं साधु । चन्द्रमण्डलस्य जलमय-त्वात्, जलस्य धावल्येऽपि समुद्रादौ नैल्यदर्शनात् मरकतकरण्डत्वरूपणमिति केचित् । अतः कारणात् त्वत् भवत्याः भोगेन, तस्य भोगेनेति वा, रिक्तकुहरं शून्यान्तरच्छिद्रम्, इदं चन्द्रबिम्बरूप करण्डम्, विधिः; ब्रह्मा; प्रतिदिनम्, दिनेदिने; भूयोभूयः, पुनः पुनः तव कृते, त्वदर्थम्, "अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ" इति वचनात् । निबिडयति; पूरयतीत्यर्थः । . . . . जान्तःपुरचारी सौविदल्ल एवेति भावः । नूनम्; ध्रुवम् । रूपकानुप्राणितेऽयमतिशयोक्त्युज्जीवितोत्प्रेक्षा । तया च करण्डपूरयितृवृत्तान्तप्रती तेरलकारेणालंकारध्वनिः ।

आगमार्थस्तु—कामेश्वरी, भगमालिनी, नित्यक्लिन्ना, भेरुण्डा, वह्निवासिनी, वज्रेश्वरी, शिवदूती, त्वरिता, कुलसुन्दरी, नित्या, नीलपताका, विजया, सर्वमङ्गला, ज्वालामालिनी, चित्रेति पञ्चदशनित्यभिः अनुलोमप्रतिलोमवताभिः कलाभिरेव कर्पूरैः तवाधिष्ठानभूतं जलमयम् जलबीजमकारात्मकम्, रजनिकरबिम्बं निबिडितं पूर्णं रिक्तं कुहर बिन्दु-षोडशस्वरसंवित्कलमात्रावशेषितं भूयोभूयः पौनःपुन्येन सितपक्षकलासु त्वया भुक्तास्विति भावः। उक्तं च—

"लक्ष्यं सदा मनसि मे भवतु त्वदीयं
तेजः परं बहुलकुङ्कुमपाकशोणम्।
भास्वत्किरीटममृतांशुकलावतंस
मध्ये त्रिकोणाममृतं परमामृतार्द्रम्॥"

इति। नन्वत्र, "प्रथमा पिबते वह्निर्द्वितीयां पिबते रविः" इति सोमोत्पत्त्याख्यग्रन्थे चन्द्रकलाना च देवताकबलनोक्तेः देव्युपभोगाभावरूपार्थकथनविरोध इति चेन्न; देवीव्यतिरेकेण वह्न्यादीना तत्रत्यदाहकादिशक्तीनामभावात्, देव्या एव सर्वत्रानुस्यूतत्वात्। तदुक्तमम्बास्तवे;

"त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनासि पुरुषे पवने बलं त्वम्।
त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा
निःसारमेतदखिलं त्वदृते यदि स्यात्॥"

इति। श्रुतिश्च; "अह रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः" इत्यादि। स्मृतिश्च;

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥"

इति॥ ९९॥

**कलत्रं वैधात्रं कतिकति भजन्ते न कवयः**
**श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः।**
**महादेवं हित्वा तव सति सतीनामचरमे**
**कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः॥ ९६॥**

## लक्ष्मीधरा

**कलत्रमिति**। कश्मलात् त्रायत इति कलत्रम्। कश्मलं नरकं, मध्यवर्णलोपः, पृषोदरादित्वात् साधुः। कलत्रं कश्मलात् त्रायत इति **रक्षितः**। वैधात्रम्; विधातृसंबन्धि, वैधात्रशब्दस्य, "तस्येदम्" इत्यणि कृते संबन्धमात्रपरत्वे तद्विशेषणजिज्ञासायां कलत्रशब्दस्यान्वय इति। धातुः कलत्रमित्युक्ते संबन्धमात्रे विहिता षष्ठी संबन्धिन्येव पर्यवस्यतीति साक्षादन्वय इति भावः। अतो नायं प्रयोगो दोषावहः। वैधात्रं कलत्रं सरस्वतीं, कतिकति भजन्ते; सेवन्ते, न कवयः; के वा कवयः न भजन्ते, सर्वेऽपि भजन्त इत्यर्थः। श्रियो देव्याः; लक्ष्म्याः, को वा न भवति पतिः कैरपि धनैः। महादेवं; सदाशिवं, हित्वा तव; भवत्याः, हे सति! पतिव्रते! सतीनां; पतिव्रतानाम्; अचरमे! अग्रगण्ये! कुचाभ्याम् आसङ्गः; आलिङ्गः, कुरवकतरोः अपि असुलभः; सुलभो न भवति। कुचालिङ्गनं दोहदत्वेनापि कुरवकतरोः अचेतनस्यापि न संभवति, किमु वक्तव्यं पुरुषान्तर इति पातिव्रत्यं वाचामगोचरमिति भावः।

अत्रेत्थं पदयोजना—हे सति! वैधात्रं कलत्रं कतिकति कवयः न भजन्ते। श्रियो देव्याः कैरपि धनैः को वा पतिः न भवति। हे सतीनामचरमे! महादेवं हित्वा तव कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः।

अयमर्थः—ये मन्त्रजपाद्यासादितसारस्वताः ते सरस्वतीवल्लभा इति गीयन्ते। ये धनधान्याश्वगजादिसमृद्धिमन्तः ते लक्ष्मीपतयः इति गीयन्ते। पार्वतीपतिस्तु महादेव एवेति पातिव्रत्यमहिमा अवाङ्मनसगोचर इति ॥ ९६ ॥

## अरुणामोदिनी

एवं वर्तमानाया देव्या वाण्याद्यपेक्षया पातिव्रत्यमसाधारणमाह—कलत्रमिति। सतीनाम्; पतिव्रतानाम्, अचरमा; आद्या, तस्याः संबुद्धिः, हे अचरमे! हे सति! पतिव्रता दाक्षायणीरूपिणी, देवि!, "सती सती योगविसृष्टदेहा ता जन्मने शैलवधूं प्रपेदे" इति कालिदासः। "सती पतिव्रतागौर्योः" इति रत्नमाला। कतिकति कियन्तः, कवयः; काव्यकरणसमर्थाः सूरयश्च। विधातुः ब्रह्मण इदं वैधात्रं ब्राह्मं कलत्रं ब्रह्मपत्नीं वाणीं न भजन्ते; न प्राप्नुवन्ति; प्राप्नुवन्त्येवेत्यर्थः। तथा श्रियः

देव्याः; विष्णुपत्न्या लक्ष्म्याः, कैरपि; कियत्परिमितैरपि धनैः, को वा पतिः; स्वामी, न भवति; भवत्येवेत्यर्थः। लोके मन्त्रजपपुरश्चरणादिभिः ये ये प्राप्तसारस्वताः ते सर्वेऽपि ब्रह्मणोऽन्येऽपि सरस्वतीवल्लभा इति गीयन्ते; तथा ये वा धनधान्यादिसमृद्धाः ते सर्वेऽपि लक्ष्मीपतय इति गीयन्त इत्यर्थः। हे सति! दीव्यतीति देवः, महांश्चासौ देवश्च महादेवः, "आन्महतः समानाधिकरणजातीययोः" इत्यात्वम्। "सन्महत्" इति समासः। त सर्वदेवतासार्वभौमतया महादेवशब्दवाच्यं सदाशिवं हित्वा, तव पतिव्रताशिरोमणेः भवत्याः कुचाभ्या स्तनाभ्याम् आसङ्गः संबन्धः कुरवकाख्यस्य तरोः पुष्पोत्पत्त्यर्थं स्त्रीस्तनालिङ्गनरूपदोहदकुतूहलस्याचेतनस्य वृक्षविशेषस्यापि, किमुतान्येषामित्यर्थः। असुलभः सुलभो न, दुर्लभ इत्यर्थः। अतः पातिव्रत्यरक्षणे सावधाना समस्तमायाविचक्षणा भवती भवत्सौन्दर्यमोहितः कश्चित्तुच्छमतिः देवगन्धर्वादीनामन्यतमः कुरवकभावं संप्राप्य पातिव्रत्यभङ्गं कुर्यादित्याशङ्कया अचेतनं कुरुवकतरुमपि दोहदार्थं नालिङ्गसे। अतो भवत्पातिव्रत्यं नान्याङ्गनासाधारणम्, नान्ये च पार्वतीपतयो गीयन्ते। कि तु महादेव एक एव गीयते। अन्ये देवाः भवत्पतिस्तु महादेवः सर्वत्राकुण्ठितपराक्रमश्चेति भावः॥ ९६॥

**गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो**
**हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम्।**
**तुरीया कापि त्वं दुरधिगमनिःसीममहिमा**
**महामाया विश्वं भ्रमयसि परब्रह्ममहिषि॥ ९७॥**

लक्ष्मीधरा

**गिरामिति**। गिरां; वाचाम्, आहुः; कथयन्ति, देवीम्; अधिदेवतां, द्रुहिणगृहिणीं; ब्रह्मणः पत्नीम्, आगमविदः; आगमरहस्यवेदिनः, हरेः; विष्णोः, पत्नीं; जायां, पद्मालयां, हरसहचरीं; शंभुपत्नीम्, अद्रितनया; पार्वतीम्। तुरीया; चतुर्थी, कापि; अनिर्वाच्या, त्वं दुरधिगमनिःसीममहिमा; दुःखेन अधिगन्तुं शक्यः, स चासौ निःसीमो महिमा यस्याः सा, देशतः कालतो वस्तुतश्चापरिच्छेद्येत्यर्थः। महामाया; शुद्धविद्यान्तर्गतं मायातत्त्वं, विश्वं; प्रपञ्चं भ्रमयसि; विवर्तयसीति विवर्तं ब्रह्मधर्मं मायायामतिदिशति। परब्रह्महिषि! परब्रह्मणः सदा-

शिवस्य महिषि! तथा च श्रूयते—"ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति पुरुषसूक्ते। ह्रीः भुवनेश्वरी, लक्ष्मीः श्रीविद्या, उभे ब्रह्मणस्ते पत्न्यौ। अत्र तयोर्मध्ये श्रीविद्यायाः प्राधान्यं, श्रीविद्यायां भुवनेश्वर्या अन्तर्भावात्। भुवनेश्वर्यां न श्रीविद्याया अन्तर्भाव इति चन्द्रकलाप्राधान्यं सैव महिषीति ध्येयम्।

अत्रेत्थं पदयोजना—हे परब्रह्ममहिषि! आगमविदः त्वामेव द्रुहिणगृहिणीं गिरां देवीमाहुः; त्वामेव हरेः पत्नीं पद्मामाहुः, त्वामेव हरसहचरीम् अद्रितनयामाहुः; त्वं तुरीया कापि दुरधिगमनिःसीममहिमा महामाया सती विश्वं भ्रमयसि। अयमर्थः—एकामेव भगवतीं नानानामभिः गृणन्त्यागमविदः परब्रह्ममहिषी श्रीविद्यापरनामधेया चन्द्रकला एकैवेति ॥ ५७ ॥

## अरुणामोदिनी

**ननु काश्च** वाण्यादयो देवतावनिताः, के के च तत्पतयो देवाः, कैषा च प्रबन्धप्रतिपाद्या यदुत्कृष्टा देवतेत्यत्राह—**गिरामिति**।

"ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः॥"

इति श्रुतेः सर्वशक्तिः सदाशिवः परं ब्रह्म, तस्य महिषी सर्वशक्तिरूपा तस्य भार्याभावमापन्ना तदङ्कसंस्थिता महालक्ष्मीर्देवी,

"तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा।
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरी॥"

इति **पुराणवचनात्**। "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतेश्च ह्रीः भुवनेश्वरी, लक्ष्मीः श्रीविद्या उभे ते च ब्रह्मणः पत्न्यौ तयोर्मध्ये श्रीविद्यायाः प्राधान्यम्, भुवनेश्वर्याः श्रीविद्यायामन्तर्भावात् सैव चन्द्रकला; सैव शिवमहिषीति संक्षेपतः श्रुत्यर्थरहस्यम्। उक्तं **चाचार्यैः सकलजननीस्तवे**—"सुता दक्षस्यादौ" इति। यद्वा—परं ब्रह्म सकलजगत्कारणभूता च सा महिषी च परब्रह्ममहिषी, सकलजगत्कारणभूता सृष्टिस्थितिलयहेतुर्महालक्ष्मीसमाख्या देवतेत्यर्थः।

"सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी।
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता॥"

इति मार्कण्डेयपुराणोक्तेः । देव्याः सकलजगत्कारणत्ववादिनां देव्यन्यस्य परब्रह्मणोऽभावादिति भावः । यद्वा—अविद्यादिभावमापद्य परब्रह्मणोऽपि मोहिकेत्यर्थः । तस्याः संबुद्धिः हे **परब्रह्ममहिषि**! एवंविधाया अपि सृष्टयौन्मुख्यमाह—**महामाय** इति । "महाविद्या महामाया" इत्यादिवचनात् महती दुरुद्धरा माया सर्वमोहक्षमा शक्तिर्यस्याः सा ; सर्वेषामपि संसारवासनाप्रदेत्यर्थः । यद्वा—मह्यते पूज्यत इति महा सर्वैरभ्यर्चनीया, सा च सा न विद्यते मायाप्रकटो यस्याः सा अमाया पूजयितॄणामकपटमेव समस्तेप्सितदात्रीत्यर्थः । तदुक्तम्—

"स्तुता संपूजिता पुष्पैर्धूपगन्धैः सुधूपिता ।
ददाति वित्तं पुत्राश्च मतिं धर्मे तथा शुभाम् ॥
सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ।
आराधिता सैव नृणां भोगस्वर्गापवर्गदा ॥"

इति । तस्याः संबुद्धिः, हे महामाये! सर्वजगत्कारणभूतमहामायारूपधारिणि! देवि! "महारात्रे महामाये" इति देवीमाहात्म्योक्तेः महामायायाः तमोरूपदेव्यवतारत्वात् । उक्तं चोत्तरे चतुर्दशाध्याये—

"शून्यं तमखिलं लोकं विलोक्य परमेश्वरी ।
बभार रूपमपरं तमसा केवलेन हि ॥
सा भिन्नाञ्जनसंकाशा दंष्ट्राञ्चितवरानना ।
विशाललोचना नारी बभूव तनुमध्यमा ॥
(सा प्रोवाच महालक्ष्मीं तामसीं प्रमदोत्तमाम् ।
नाम कर्म च मे मातर्देहि तुभ्यं नमो नमः ॥)
तां प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम् ।
ददामि तव नामानि यानि कर्माणि तानि ते ॥
महामाया महाकाली महामारी क्षुधा तृषा ।
निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया ॥
इमानि तव नामानि प्रति(पाद्या)नि कर्मभिः ।"

इति । **आगमविदः** ; भागवततत्त्वप्रतिपादकग्रन्थतात्पर्यवेत्तारः गिरा देवीम् ; वाग्देवीम् भवदीयसात्त्वगुणावतारभूताम् भवत्या वाणीत्यादिनामभिः कृतसंकेतां देवीम्, "गीर्वाग्वाणी सरस्वती" इत्यत्र "भागुरिमते गिरेत्यप्यस्ति" इति व्याख्यानात् आकारान्तो वा । तां देवीम् । अत्रोक्तमुत्तराध्याये—

"तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप ।
सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ ॥
अक्षमालाङ्कुशधरा वीणापुस्तकधारिणी ।
सा बभूव वरा नारी नामान्यस्यै च सा ददौ ॥
महाविद्या महावाणी भारती वाक् सरस्वती ।
आर्या ब्राह्मी महाधेनुर्वेदगर्भा सुरेश्वरी ॥"

इति । द्रुहिणस्य भवत्सृष्टप्राथमिकमिथुनद्वयोत्पन्नस्य विधातृनामकस्य पुरुषस्येत्यर्थः । यथोक्तं तत्रैव—

"इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम् ।
हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ॥
ब्रह्मन् विधे विरिञ्चेति धातरित्याह तं नरम् ।
श्रीः पद्मे कमले लक्ष्मीत्याह माता स्त्रियं च ताम् ॥"

इति । गृहिणीम्; सधर्मिणीम्, आहुः; वदन्ति । "ब्रुवः पञ्चानाम्" इत्यादिना ब्रुव आहादेशः । "परस्मै पदानाम्" इत्यादिना त्सेर्जुसादेशः । तथा पद्मा विधिना सह पूर्वोक्तप्रकारेण संभूता लक्ष्मीदेवता हरेः;

"सरस्वतीं स्त्रियं गौरीं कृष्णं च पुरुषं नृप ।
जनयामास नामानि तयोरपि वदामि ते ॥
विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः ।
उमा गौरी सती चण्डी सुन्दरी सुभगा शिवा ॥"

इति मार्कण्डेयोक्तेः तृतीयमिथुनोत्पन्नस्य विष्णोः पत्नीं जायामाहुः । तथा अद्रितनयाम्; क्वचिन्निमित्तवशेन हिमवत्पुत्रीकात्वमापन्नां विष्णुस्वसारमिमां देवीं हरसहचरीम्;

"महाकाली भारती च मिथुने सृजतिस्म ह ।
एतयोरपि रूपाणि नामानि च वदामि ते ॥
नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम् ।
जनयामास पुरुष महाकाली सितां स्त्रियम् ॥
स रुद्रः शंकरः स्थाणुः कपर्दी च त्रिलोचनः ।
त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षरा स्वरा ॥"

इति मार्कण्डेयोक्तेः रुद्राख्यस्य पुरुषस्य सहचरीं जायामाहुः। तथा चोक्तं मार्कण्डेये—

"ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम्।
रुद्राय गौरीं वरदां वासुदेवाय च श्रियम्॥
स्वरया सह संभूय विरिञ्चोऽण्डमजीजनत्।
बिभेद भगवान् रुद्रस्तद्गौर्या सह वीर्यवान्॥
अण्डमध्ये प्रधानादिकार्यजातमभून्नृप।
महाभूतात्मकं सर्वं जगत्स्थावरजङ्गमम्॥
पुपोष पालयामास तल्लक्ष्म्या सह केशवः।"

इति। हे देवि! त्वं विधिविष्णुरुद्राणा तत्पत्नीनां वाणीलक्ष्मीगौरीणां कारणभूता भवती दुःखेनाप्यधिगन्तुमशक्या दुरधिगमा। न हि भगवतीसीमो कस्यापि विज्ञायत इति। निर्गतः सीमायाः निःसीमः परिच्छेदविरहितत्वादिति भावः। महिमा महत्वं यस्याः सा। ब्रह्मादिदुर्विज्ञेयचरिता तुरीया सकलदुःखातीता योगिगम्यमस्यास्तीति तुरीया। अर्श आदित्वान्मत्वर्थीयोऽच्प्रत्ययः। अत एव कापि अनिर्वचनीया नामान्तरैरनिर्देश्ये-त्यर्थः। "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इति श्रुतेः। उक्तं च मार्कण्डेये—

"महालक्ष्मीर्महाराज सर्वसत्त्वमहेश्वरी।
निराकारा च साकारा सैव नानाभिधानभृत्॥
नामान्तरैर्निरूप्यैषा नाम्ना नान्येन केनचित्।"

इति। विश्वम् समस्तमपि जनम्, ज्ञानिनामज्ञानिनां चेत्यर्थः। विशत्यज्ञानमिति व्युत्पत्त्या विशति ज्ञानोद्रेकेण परमार्थमिति व्युत्पत्त्या च विश्वशब्दस्योभयोरपि वाचकत्वादिति भावः। भ्रमयसि चालयसि; मोहान्धकूपे निपातयसीत्यर्थः। उक्तं च देवीमाहात्म्ये—"ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे" इत्याभ्य,

"ज्ञानिनामपि चेतांसि देवी भगवती हि सा।
बलादाकृष्य मोहाय महामाया प्रयच्छति॥
तया विसृज्यते विश्वं जगदेतच्चराचरम्।
सैषा प्रसन्ना वरदा नृणा भवति मुक्तये॥
सा विद्या परमा मुक्तेर्हेतुभूता सनातनी।
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी॥"

इति। विधिहर्यादिसकलदेवताकारणभूता तत्तन्नामव्यपदेश्या सकलजगत्कारणं परं ब्रह्म त्वमेवेति परमार्थः ॥ ९७ ॥

प्रक्रान्तां स्तुतिमुपसंहरन् षट्कमलभेदसिद्धान्तं निर्दिशति—

**सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते**
**रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा।**
**चिरंजीवन्नेव क्षपितपशुपाशव्यतिकरः**
**परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ॥ ९८ ॥**

लक्ष्मीधरा

**सरस्वत्या** इति। सरस्वत्या; भारत्या, लक्ष्म्या; पद्मालयया; विधिहरिसपत्नः; यथाक्रममिति शेषः। सरस्वतीपतित्वेन विधेः ब्रह्मणः सपत्नः असूयास्पदम्, लक्ष्मीपतित्वेन हरेः असूयास्पदमित्यर्थः। विहरते; विहरमाणः, रतेः; काममहिष्याः, पातिव्रत्यं; पतिव्रताधर्मं पुरुषान्तरासंपर्करूपं शिथिलयति, मन्मथाकारतया रतेः मन्मथभ्रान्तिं जनयन् संभोगेच्छां जनयतीति भावः। रम्येण; अतिसुन्दरेण, वपुषा; शरीरेण, तादात्म्यबुद्ध्येति यावत्। एवं सादाख्यायाः कलाया उपासकस्य ऐहिकफलमुक्त्वा आमुष्मिकफलमप्याह -**चिरमिति**। चिरंजीवन्नेव; नित्यजीवनः सन्। सावयवद्रव्यस्य नित्यत्वं पशुपाशव्यतिकरक्षपणहेतुकम्। अत्र केवलव्यतिरेकि अनुमानं साधनत्वेन प्रयोज्यम्—सावयवं यत् क्षपितपशुपाशव्यतिकरं न भवति, तन्नित्यं न भवति, यथा पश्वादि, इति जीवन्मुक्तिसिद्धिः। सावयवाः कपिलादयः, मार्कण्डेयादयो नित्यसिद्धाः, अतः अन्वयव्यतिरेकि वा भवतु सावयवस्य नित्यतायां साधनम्। एवं नित्यजीवनः सन्, क्षपितपशुपाव्यतिकरः; क्षपितः विनष्टः पशुपाशयोः व्यतिकरः, पशुः जीवः, इन्द्रियैः प्रपञ्चं पश्यतीति। यद्वा—"पश बन्धने" इत्यस्माद्धातोः पशुः अविद्याबद्धो जीवः, पाशः अविद्या। एतच्च श्रूयते—

**"अदि॑तिः पाशं॒ प्र मु॑मोक्त्वे॒तं नमः॑ प॒शुभ्यः॑ पशु॒पत॑ये करोमि"**

इति । अयमर्थः—अदितिः आदित्यमण्डलान्तर्गता बैन्दवी शक्तिः । पाशम् अविद्याकृतं बन्धं, प्रमुमोक्तु प्रकर्षेण अत्यन्तं मोचयतु । एतत् नमः नमस्कारं पशुभ्यः पशुपतये करोमि । पशुभ्य इति तादर्थ्ये चतुर्थी । तदर्थत्वं निवृत्तिः । पशुत्वनिवृत्त्यर्थम् । अयमर्थः—अदितिः पशुपतिना सदाशिवेन युक्ता पाशविमोचनं करोत्विति । पशुशब्दस्य जीववाचित्वं **तैत्तिरीयके सौम्यकाण्डे**; "तेषामसुराणाम्" इत्यनुवाके, "**तेषामसुराणाम्**" इत्यारभ्य, **तस्माद्रुद्रः पशूनामधिपतिः**" इत्यन्तेन प्रतिपादितम् । अतः पशुपाशौ जीवाविद्ये, तयोर्व्यतिकरः संबन्धः, स च क्षपितः विदलितपशुपाशसंबन्धः सदाशिवात्मना अवस्थितः, परानन्दाभिख्यं; परानन्दात्मिका अभिख्या ज्योतिर्यस्य सः परानन्दाख्यं ज्योतीरूपं, रसयति; आस्वादयति, रसं सुखं, त्वद्भजनवान्; त्वद्भक्तः तव भजनं सेवा ।

अत्रेत्थं पदयोजना—हे भगवति! त्वद्भजनवान् सरस्वत्या लक्ष्म्या विधिहरिसपत्नः सन् विहरते । रम्येण वपुषा रतेः पातिव्रत्यं शिथिलयति । क्षपितपशुपाशव्यतिकरः चिरंजीवन्नेव परानन्दाभिख्यं रसं रसयति ।

अत्रेदमनुसंधेयम्—जीवन्मुक्तानामविद्यानिवृत्तावपि कुलालचक्रभ्रमणन्यायेन देहसंबन्धः । यथोक्तं **षष्टितन्त्रे** सप्तत्याम्—

"सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः ॥"

इति । अत्र त्वद्भजनवानित्यत्र द्विविधं भजनम्—षट्चक्रसेवात्मकं, धारणात्मकं च । आद्यं निरूप्यते—आधारस्वाधिष्ठाने तामिस्रलोकत्वान्नोपास्ये । मणिपूरप्रभृति सहस्रकमलपर्यन्तं पञ्च चक्राणि पूज्यानीति । तत्र मणिपूरकपूजापराणां सार्ष्टिरूपा मुक्तिः; सार्ष्टिर्नाम देव्याः पुरसमीपे पुरान्तरं निर्माय सेवां कुर्वाणस्य अवस्थितिः । संवित्कमलपूजारतानां सालोक्यमुक्तिः; सालोक्यं नाम—देव्याः पट्टणे निवासः । विशुद्धिचक्रोपासकानां सामीप्यमुक्तिः; सामीप्यं नामाङ्गसेवकत्वम् । आज्ञाचक्रोपासकानां सारूप्यमुक्तिः; सारूप्यं नाम समानरूपत्वम् । पृथग्देहधारित्वेनेति सायुज्याद्भेदः । एतच्चतुर्विधं गौणं बाह्यदुःखातिवर्तित्वमात्रात् मुक्तिरिति व्यपदिश्यते ।

परं तु सायुज्यात्मिकैव शाश्वती मुक्तिः सहस्रकमलोपासकानामेवेति । अत एव परानन्दाभिख्यं रसं त्वद्भजनवान् रसयतीति ।

अत्रेदं मततत्त्वम्—षट्कमलभेदमते सुखस्वरूपैव मुक्तिः । सुखं तु लौकिक-दृष्टान्तेन स्त्रीसंभोगात्मकमेव । लोकेऽपि स्त्रीसंमेलनात्परं सुखं नास्ति । एवमत्यन्तदुः-खोच्छेदानन्तरं सायुज्यसंसिद्धौ शिवशक्तिसंपुटान्तर्भावात् तदात्मिकैव मुक्तिरिति ।

तदयमत्र निष्कर्षः—पूर्वं मूलाधारादिषट्चक्राणां त्रिकोणाष्टकोणदशार-द्वितयमन्वश्रशिवचक्रात्मना तादात्म्यं प्रतिपादितम् । एतदेव नादबिन्द्वोरैक्यम् । तथा हि नादो नाम—श्रीचक्रम् । बिन्दुर्नाम षट्कमलगहनं वक्ष्यते । तयोरैक्यं नाम—आधारचक्रं चतुर्दलम्, तत्कर्णिका त्रिकोणात्मिका ; स्वाधिष्ठानं षड्दलम् , तत्कर्णिका अष्टकोणात्मिका; मणिपूरं दशदलं पद्मम्, तत्कर्णिका दशकोणात्मिका ; अनाहतं द्वादशदलम्, तत्कर्णिका द्वितीयदशकोणात्मिकैव; विशुद्धिचक्रं षोडशदलम्, तत्कर्णिका चतुर्दशकोणात्मिका ; एतावत्पर्यन्तं शक्तिचक्रैक्यम् । आज्ञाचक्रं द्विदलम्, अष्टकोणमेकत्र षोडशकोणमपरत्रेति द्विधा भिन्ना कर्णिका । (अयं भावः—द्विधा भिन्नं चतुरश्रप्रकृतिकं शिवचक्रचतुष्टयात्मकम् आधारस्वाधिष्ठानात्मकं चेति प्रपञ्चितम् ।) वृत्तत्रयं स्वाधिष्ठानान्ते एकं वृत्तं रुद्रग्रन्थ्यात्मकम्; अनाहतान्ते एकं विष्णुग्रन्थ्या-त्मकम्; आज्ञाचक्रान्ते एकं ब्रह्मग्रन्थ्यात्मकम् । तत उपरि चतुर्द्वारोपेतं भूपुरत्रितयं द्वारेषु चतुर्षु सोपानयुक्तम् । तच्च सहस्रदलकर्णिका । तस्य कमलस्य दलानि सहस्रम् । बैन्दवस्थानं चतुर्द्वारोपेतकर्णिकामध्ये । एवं प्रासादन्यायेन श्रीचक्रस्य कम-लानां चैक्यमनुसंधेयम् । एतच्च नादबिन्द्वैक्यं गुह्याद् गुह्यतमं शिष्यानुग्रहात् उपदिष्टम् ।

अस्मिन् षट्चक्रे पञ्चाशत्कलानामन्तर्भावः कथितः । चन्द्रखण्डे स्वराः; सूर्यखण्डे स्पर्शाः ; अग्निखण्डे अन्तःस्थाः ऊष्माणश्च हकारवर्जिताः ; हकारळकारौ बैन्दवे, क्षकारः सर्वत्रेति ; 'सवित्रीभिः'[1] इति श्लोकेन प्रागेव प्रतिपादितम् । मूलाधारादिदलेषु कलानाम् अन्तर्भावः प्रागेव प्रतिपादितः । कलानां तिथ्यात्मकत्वं, नित्यानां कलात्मकत्वं, कलानां मूलमन्त्रगतपञ्चदशाक्षरात्मकत्वं, पञ्चदशाक्षराणां त्रिखण्डत्वं, त्रिखण्डस्य सोमसूर्यानलात्मकत्वं, सोमसूर्यानलानां ग्रन्थित्रयात्मकत्वं, ग्रन्थित्रयस्य मन्त्रगतह्रींकारत्रयात्मकत्वं, ह्रींकारस्य भुवनेश्वरीमन्त्रत्वं, भुवनेश्वरीमन्त्रस्य

[1] आनन्दलहर्यां १७ श्लोके.

मूलमन्त्रान्तर्गतत्वं, मूलमन्त्रस्य चक्रेणैक्यं, तच्चक्रनवकस्य मूलाधारादिषट्चक्रेषु ब्रह्मग्रन्थ्यादित्रिकेऽपि सहस्रकमलकर्णिकादौ तादात्म्यम्। एतदेव कलानादयोरैक्यं नाम।

अयमत्र निष्कर्षः—नादेन बिन्दोरैक्यं, बिन्दुना कलाया ऐक्यं, कलायाश्च नादेनैक्यं, एवं त्रितयं; कलया बिन्दोरैक्यं, कलया नादस्यैक्यं, श्रीविद्यया पञ्चकस्यैक्यमिति षड्विधत्वमैक्यस्येति परमरहस्यं गुरूपदेशवशाद् ज्ञेयम्। एवं षोढैक्यं भगवत्याः सपर्येति सम्यगुपवर्णितम्। षोढैक्यानुसंधानानन्तरं दशभुजा भगवती श्रीविद्या मणिपूरे प्रत्यक्षं परिदृश्यमाना सपर्यया संनिधेयेति ऐक्यमेव सपर्येति वदतो ममाशय इति विज्ञेयम्।

अधुना बिन्दुस्वरूपं प्रपञ्च्यते—बिन्दुरिति मूलाधारादिचक्रषट्कम्। बिन्दुः जगदुत्पत्तिलयहेतुकः शिवस्य शक्तिविशेषः। स च एक एव सहस्रदलकमलान्तर्गतचतुर्द्वारात्मककर्णिकामध्यगतचष्कोणात्मकं शक्तितत्त्वम्। तन्मध्यगतशिवतत्त्वं नाद इत्युच्यते। स चतुर्विध इति प्रागेवोक्तम्। उभयोः शक्तिशिवयोः शब्दार्थरूपत्वात् कलात्मकत्वमुभयसाधारणम्। अतश्च मेलनं नादबिन्दुकलातीतमिति समयमतरहस्यम्। स च बिन्दुः दशधा भिद्यते। यथोक्तम्—

"दशधा भिद्यते बिन्दुरेक एव परात्मकः।
चतुर्धाधारकमले षोढाधिष्ठानपङ्कजे॥
उभयाकाररूपत्वादितरेषां तदात्मता।"

इति। अस्यार्थः—एक एव बिन्दुः मूलाधारकमलगतचतुर्दलेषु चतुर्धा, स्वाधिष्ठानगतषड्दलेषु षोढा, एवं दशधा भिद्यते। अयं भावः—मूलाधारं चतुष्पत्रं सरसिजं, स्वाधिष्ठानं षड्दलं, मणिपूरं दशदलं, अनाहतं पद्मं द्वादशदलं, विशुद्धिपद्मं षोडशदलं, आज्ञाचक्रं द्विदलमिति सर्वयोगशास्त्रसिद्धम्। अत्र आधारपद्मस्य दलचतुष्टयं बिन्दुचतुष्टयात्मकम्। ते च बिन्दवो मनोबुद्ध्यहंकारचित्ताख्याः प्रकृत्यात्मकाः जगन्निर्माणहेतव इति सर्वयोगशास्त्रसिद्धम्। स्वाधिष्ठानपद्मगतषड्दलानां कामक्रोधलोभमोहमदमात्सर्यात्मकाः षड्बिन्दवः। अत एव ते संहृतिबिन्दव इत्याहुः। तदुक्तं भगवता **पतञ्जलिना**—"स्वाधिष्ठाने संहारः षड्बिन्दुकृतः" इति। एवं दश बिन्दवः कमलद्वयदलात्मकाः। मणिपूरं मूलाधारस्वाधिष्ठानात्मकमिति कृत्वा

दशदलम्। अनाहतचक्रे मणिपूरप्रकृतिकं दशदलं पूर्वार्धे, कमलद्वयप्रकृतिकं दलद्वयं द्वादशदलम् अनाहतपद्मम्। विशुद्धिपद्मं तु अनाहतचक्रप्रकृतिकं द्वादशदलम्, आधारप्रकृतिकं चतुर्दलं, एवं षोडशदलम्। तथा मणिपूरप्रकृतिकं दशदलं, स्वाधिष्ठानप्रकृतिकं षड्दलमिति षोडशदलम्। आज्ञाचक्रं तु आधारस्वाधिष्ठानात्मकमिति द्विदलम्। एवं मणिपूरप्रभृति आज्ञान्तानि चत्वारि कमलानि मूलाधारस्वाधिष्ठानप्रकृतिकानि। अत एव मूलाधारद्विके उत्तरकमलचतुष्कमन्तर्भूतमिति एकस्यैव दशधात्वं नान्यथेति सिद्धम्।

यद्यपि कौलानां द्विकानुसंधानात् षट्कमलानुसंधानफलं सेत्स्यति। तथापि षड्विधैक्यानुसंधानाभावात् कौलमार्ग एवेति न देव्या मणिपूरे सांनिध्यं, पञ्चविधमुक्तियुक्तचभावश्च, नादबिन्दुकलातीतत्वमप्यसंभाव्यमेव कौलमते इति। समयिनां तु—कार्यभूतचतुष्कानुसंधानादेव कारणभूतकमलद्वयानुसंधानफलं सेत्स्यत्येवेति। अत एव पञ्चविधसाम्यसिद्धौ समयसमयिभावः प्रत्यक्षं परिदृश्यते, समयसमयिनोः समयिनां सेवकानामिति भगवत्पादमततत्त्वम्।

एवं भजनशब्दार्थं प्रतिपाद्य प्रकारान्तरेण भजनशब्दार्थो निरूप्यते—यदाहुः **भगवत्पादाः** "धारणापरिज्ञानान्मुक्तिः" इति। अस्यार्थः—धारणाः षष्ट्युत्तरत्रिशतसंख्याकाः। धारणानाम वायोः कमलेषु नादकलाभ्यां निरोधः। स च षट्कमलेषु षोढा सप्तमे कमले समयशब्दाभिख्येन सार्धं सप्तविधः। एकैकस्मिन् कमले पञ्चाशदिति षष्ट्युत्तरत्रिशतं धारणाः। ताश्च पृथक् नादबिन्दुकलाभिः सार्धं मेलनप्रकारैरनन्ता धारणाः गुरूपदेशवशादवगन्तव्याः। धारणानां फलम् आधरादिषट्चक्रे यथाक्रमं मतिस्मृतिबुद्धिप्रज्ञामेधाप्रतिभासंविद्रूपं दिङ्मात्रं दर्शितम्। अधिकं तु **सुभगोदये चरणागमे** च सप्रपञ्चं बहुधा प्रतिपादितं तत एवावधार्यं, ग्रन्थविस्तराभयान्नोपवर्णितमिहेति।

अत एव **कालिदासभगवत्पादैः** कुलसमयमतभेदप्रतिपादकश्लोकेन **सकलजननीस्तोत्रे** कथितम्। यथा—

"चतुष्पत्रान्तःषड्दलपुटभगान्तस्त्रिवलय-
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतिलते।

षडश्रं भित्वादौ दशदलमथ द्वादशदलं
कलाश्रं च द्व्यश्रं गतवति नमस्ते गिरिसुते ॥"

इति । अस्यार्थः—चतुष्पत्रम्; आधारकमलम्, अन्तः; अन्तःस्थितम्, अन्तर्भूतमित्यर्थः यस्मिन् तत् स्वाधिष्ठानमिति बहुव्रीहिः, न तु तत्पुरुषः, उत्तरस्य पूर्वस्मिन्नन्तर्भावायोगात् । 'षडश्रं भित्वादौ' इत्युत्तरवाक्यानन्वयाच्च बहुव्रीहिरेव । चतुःषट्पत्रान्तश्च तत् षड्दलं स्वाधिष्ठानं च चतुष्पत्रान्तःषड्दलम् । तस्य पुटभागाः पुटात्मकाः संपुटात्मकाः तत्प्रकृतिका इति यावत्, ते च ते भगाः त्रिकोणानि । मणिपूरप्रभृति चतुश्चक्रस्य मूलाधारप्रकृतिकत्वस्योक्तत्वात् तेषां त्रिकोणात्मकत्वम् । "त्रिकोणे बैन्दवे श्लिष्टमष्टारेऽष्टदलाम्बुजम्" इत्यत्र सम्यङ्निर्णीतम् । पुटभागानामन्तर्मध्ये त्रिवलयं ग्रन्थित्रयं स्वाधिष्ठानानाहताज्ञान्तेषु अग्निसूर्यचन्द्रात्मकरुद्रग्रन्थिविष्णुग्रन्थिब्रह्मग्रन्थिपर्यायत्वेन स्थितमित्यर्थः । तत्र स्फुरत् स्फुरन्ती, "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे" इत्यादिना पुंवद्भावः । विद्युतः सौदामिन्याः, वह्नेः अग्नेः, द्युमणेः, सूर्यस्य । नियुतशब्दः अगणेयां संख्यां लक्षयति । तस्यैवाभा यस्याः सा, सा च द्युतिलता, नित्या तटिद्वल्ली स्थिरसौदामिनीति यावत् । तस्याः संबुद्धिः । आज्ञाचक्रान्ते ब्रह्मग्रन्थिभेदनसमये विद्युन्नियुताभा; स्वाधिष्ठानान्ते रुद्रग्रन्थिभेदनसमये वह्निनियुताभा; अनाहतचक्रान्ते विष्णुग्रन्थिभेदनसमये द्युमणिनियुताभा इति विवेकः । षडश्रं मूलाधारगर्भितं स्वाधिष्ठानमादौ भित्वा, अथ तदनन्तरं दशदलं मणिपूरं भित्वा, द्वादशदलम् अनाहतचक्रं भित्वा, कलाश्रं विशुद्धिचक्रं भित्वा, द्व्यश्रम् आज्ञाचक्रं भित्वा, गतवति सहस्रकमलमिति शेषः । हे गिरिसुते! हिमाचलतनये! ते नमः । अत्र चतुष्पत्रं मूलाधारं स्वाधिष्ठाने अन्तर्भूतं कौला उपासत इति प्रागेव प्रतिपादितम् । समयिनस्तु स्वाधिष्ठानं भित्वा मणिपूरं प्रविष्टायाः देव्या उपासनं कुर्वन्तीति समयमततत्त्वं च प्रतिपादितम् ।

अत्रेदमुपह्वरम्—षट्कमलेषु मनःषष्ठं भूतपञ्चकं तादात्म्येनावतिष्ठते । तच्च पिण्डब्रह्माण्डयोरैक्यानुसंधानमहिम्ना, षट्कमलानुसंधानमहिम्ना, पञ्चविधसाम्यानुसंधानमहिम्ना, षड्विधैक्यानुसंधानमहिम्ना पिण्डाण्डं ब्रह्माण्डवदवभासत इति सर्वयोगशास्त्ररहस्यम् । अत एव योगिना चतुर्विधैक्यानुसंधानं कर्तव्यमेव । तथा च श्रूयते—

" पिण्डब्रह्माण्डयोरैक्यं लिङ्गसूत्रात्मनोरपि ।
स्वापाव्याकृतयोरैक्यं क्षेत्रज्ञपरमात्मनोः ॥ "

इति । अयमर्थः—पिण्डब्रह्माण्डयोरैक्यं ज्ञातव्यम् । तदनन्तरं लिङ्गात्मसूत्रात्मनोरैक्यमवगन्तव्यम् । लिङ्गात्मा लिङ्गशरीरम् एकादशेन्द्रियगणः, तन्मात्रापञ्चकं षोडशकं लिङ्गशरीरम् । सूत्रात्मा ब्रह्माण्डावच्छिन्नो वायुः लिङ्गशरीरस्य अर्चिरादिमार्गप्रापकः । तयोरैक्यमवगन्तव्यम् । स्वापाव्याकृतयोः; स्वापः सुषुप्त्यवस्थापन्नः साक्षी प्राज्ञः, अव्याकृतः अविद्याशबलितं ब्रह्म, तयोरैक्यम् । क्षेत्रज्ञः जीवः, परमात्मा ब्रह्मस्वरूपं, तयोरैक्यं ज्ञातव्यम् । एवं संप्रदायरहस्यसंक्षेपः । विस्तरस्तु **सुभगोदये शारीरके** ज्ञातव्यः । अस्मिन् श्लोके सौन्दर्यलहर्यां यत्प्रमेयजातं समयसिद्धान्तरहस्यत्वेन कौलसिद्धान्तरहस्यत्वेन च प्रतिपादितमस्माभिः संक्षेपतः, तत्सर्वं सूक्ष्मदृशा महात्मभिरनुसंधेयमिति सर्वमनवद्यम् ॥ ५८ ॥

## अरुणामोदिनी

अथ देव्युपासकानां वाण्याद्युपासकेभ्यः चतुर्विधपुरुषार्थसिद्धिं कथयन्नाह—**सरस्वत्या इति** । हे देवि ! तव भवत्याः, भजनमस्यास्तीति त्वद्भजनवान्, भवद्भक्त उपासकः, "तदस्त्यस्मिन्" इति मतुप् । "झयः" इति वत्वम् । विधिहरिसपत्नः; विधिः वाणीपतिः ब्रह्मा भवज्ज्येष्ठपुत्रः, हरिः लक्ष्मीपतिः विष्णुः द्वितीयपुत्रः, तयोः सपत्नः, शत्रुः, तत्सदृशः सन्निति यावत् । सरस्वत्या वाण्या, तथा लक्ष्म्या, रमया च, विहरति; क्रीडति । विधिहरिसमानैश्वर्यमवाप्य पुत्रवत्सला भवदनुग्रहात् तज्जायाभ्या तत्समानं विहारम् आवासः सन् वाणीपतिः लक्ष्मीपतिरित्येव व्यवह्रियत इत्यर्थः । एवं 'सरस्वतीपतित्वे ते विधेयम्, लक्ष्मीपतित्वेन हरेश्च असूयास्पदं भवति' इति **लक्ष्मीधरः** । न केवलमेवं संपत्सारस्वतयोरेवावाप्तिः । अपि तु त्रिलोकसौन्दर्यमप्यवाप्नोतीत्याह—**रतेरिति** । रम्येण; अतिसौन्दर्येण वपुषा; देहेन, रतेः; मदनप्रियायाः त्रैलोक्यमोहकसौन्दर्यवत्याः तादृशपतिमत्याश्च इति ध्वनिः । **पातिव्रत्यम्**; पतिव्रताभावम् एकभर्तृनैयत्य, शिथिलयति; दूरीकरोतीत्यर्थः । मन्मथादप्यतिसुन्दरतया रतिदेव्याः सभोगेच्छामात्मनि जनयन् तत्पातिव्रत्यहानि करोतीत्यर्थः । मदनादप्यतिसुन्दरो भवतीति तात्पर्यार्थः । एवं सारस्वतमहदैश्वर्यदेहसौन्दर्यरूपामधिकफलावाप्तिमुक्त्वा, आमुष्मिकफलप्राप्तिमाह—**चिरमिति** । चिरं; बहुकाल, जीवन्नेव; प्राणधारणं कुर्वन्नेव दीर्घायुष्यता प्राप्तः सन्नेव, तावत्पर्यन्तं सरस्वतीलक्ष्मीसाहित्यमवाप्तः सन्नेवेत्यर्थः । महदैश्वर्यादिसद्भावेऽपि दीर्घायुष्मत्ताभावे सर्वमपि

निष्फलं भवेदिति देवीभक्ताना तत्संपत्तिरित्युक्ता । क्षपितोऽपि उक्षीकृतः पश्यति इन्द्रियैः प्रपञ्चमिति, पश्यते बध्यते कर्मपाशैरिति वा पशुर्जीवः। तस्य पाश तत्संबन्धनम् अविद्याम् । यद्वा—पशवः ज्ञानदुर्विदग्धाः; नास्ति परलोकः, नास्ति विद्येति वादिनः केवलमैहिकसुखमेद मान्यतरं मन्यमानाः, पाशा नाम बन्धहेतवः;

"घृणा शङ्काभयं लज्जा जुगुप्सा चैव पञ्चमी ।
कुलं जातिश्च शीलं च अष्टौ पाशाः प्रकीर्तिताः ॥
एतैः पाशैर्विरहितो निर्विकारो जितेन्द्रियः ।
विश्वव्याप्तिं महाज्ञान क्रमेण पुरुषोऽश्नुते ॥"

इति वचनोक्ताः । पाशाः, पशवश्च पाशाश्च पशुपाशाः तयोः, तेषा च व्यतिकरः संपर्को येन सः । पशुपाशभावविच्छेदद्वारा पशुपति प्राप्तः सन्नित्यर्थः । परानन्दः; मानुषानन्द-नियममारभ्य, "स एको ब्रह्मण आनन्दः" इत्युक्तानन्दादन्यस्याभावात् तादृश इत्यभिख्या नाम यस्य तम्, रसम्; "रसो वै सः । रसꣳह्येवायं लब्ध्वानन्दी भवति" इति श्रुतिप्रतिपाद्यब्रह्मानन्दमित्यर्थः । रसयति आह्लादयति भवद्भजनेन दृढतरमविद्याबन्धं छित्वा मोक्षभागपि भवतीति भावः । अत्र भगवत्युपासनायाः सर्वेष्टदातृत्वं प्रथमत एवोप-बृंहितमस्माभिरित्युपरम्यते । यथा च सकलदेवताराध्या भवती सर्वदेवताभ्योऽधिका, यथा च भवत्प्रतिपादिका विद्या हादिकादिरूपेण सकलप्रपञ्चोत्पत्तिमातृका सर्वमन्त्रजालोत्कटा तथा भवद्भक्ता अपि समस्तैर्गुणैः ब्रह्मादिभ्योऽपि सर्वोत्कटा भवन्तीति संदर्भार्थः ॥९८॥

**निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे**
**निराघाटज्ञाने नियमपरचित्तैकनिलये ।**
**नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतिपदे**
**निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् ॥ ९९ ॥**[1]

## अरुणामोदिनी

एवं भगवती स्तुत्वा स्तुतेः प्रमाणीकरणं प्रार्थ्यते—निधे इति । निधीयते सर्वं जगदस्याम् उपादानत्वादिति निधिः । भक्ताना शेवधिर्वा । तस्याः संबुद्धिः हे निधे! सर्वजगदाधारभूते सकलेष्टार्थप्रदे च । "आधारभूता जगतस्त्वमेका" इति मार्कण्डेये । तर्ह्येवं चेदं;

[1] नाय श्लोको लक्ष्मीधराचार्येण व्याख्यात.,

"हिरण्यगर्भः समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत्।
सदाधार पृथिवीं द्याम् . . . . . . . . . . ."

इति श्रुतेः ब्रह्मादिसाधारण्यमेव स्यादित्यत्राह—**नित्यस्मरे** इति। नित्योऽविनाशी स्मरैः प्रकाशो यस्याः सा, नित्यस्मेरा अविनाशिप्रकाशा तस्याः संबुद्धिः, हे नित्यस्मेरे! ब्रह्मादीना तत्र तत्र स्मृतिषु जन्यत्वश्रवणात् भवदुपासनालब्धवैभवत्वाच्च न नित्यप्रकाशित्वरूपं देवत्वमिति भावः। एवं च तर्हि भवदनुग्रहात् शिवस्य नित्यप्रकाशलाभात् तत्साधारण्य स्यादित्यत्राह—**निरवधिगुणे** इति। निरवधयोऽवधिरहिताः इयत्तापरिमाणरहिता गुणाः दयादाक्षिण्यादयः, शिवस्य त्रिपुरसंहारादिकालेषु शक्तिप्रदानानुग्रहकारिणो यस्याः सा निरवधिगुणा, शिवस्यानुग्रहकारिणी तस्याः संबुद्धिः; हे निरवधिगुणे! "परोऽपि शक्तिरहितः शक्तः कर्तुं न किंचन" इति न्यायादिति भावः। यद्वा—निरवधयोऽवधिरहिता अनन्तगुणा उपासकानामिष्टार्थप्रदानाय कल्पितानि रूपाणि यस्याः सा।

"उपासकाना कार्यार्थं ब्रह्मणो रूपकल्पना।
रूपस्थाना देवताना पुंस्त्र्याङ्गास्त्रादिकल्पना"॥

इति श्रुतेरिति भावः। ननूपासिताना विद्यादिमूर्तीनामेव इष्टार्थदातृत्वात् किमनेनेति न वाच्यम्। विध्यादिरूपेण सर्वत्र तत्तदुपासकानामीश्वरस्यैवेष्टार्थदातृत्वात्। उक्तं हि गीतासु—

"यो यो यां या तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचला श्रद्धा तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्या राधनमीहते।
लभते च ततः कामान् मयैव विहितान् हि तान्॥"

इति। बादरायणोऽपि सूत्रयायमास—"फलमत उपपत्तेः" इति।

ननु ब्रह्मादिरूपेणेयमेव इष्टार्थदात्री चेत् कोऽयमुपासकेषु तारतम्यमत आह—**नीतिनिपुणे** इति। नीतौ यथार्हं तत्तदुपासकाना केवलाना तरतमभावसहिताना च इष्टार्थप्रादाने निपुणे नैपुण्यवती सर्वेषामपि देवी इष्टार्थदानपरायणैव। एकत्र तदसमृद्धिः, समृद्धिरन्यत्र, समृद्ध्यसमृद्धी चोपासनाया वैकल्याभाववैकल्याभ्यामेवेति भावः। यद्वा—नीतिरिति लुप्तमध्यमयकारोऽयम् • धर्माधर्मवाची नियतिशब्दः। नियती धर्माधर्मावनुसृत्य निपुणे जगत्सर्जनपरायणे। अत एव सुखदुःखादिवैचित्र्ययुक्तजगत्सर्जनेन वैषम्यनैर्घृण्यदोषापत्तिर्देव्या इति भावः। अत

एवोक्त गीतासु—"न मे द्वेष्योऽस्ति न प्रियः" यति। बादरायणोऽपि सूत्रयामास—"वैषम्यनैर्घृण्ये न सापेक्षत्वात्। तथाहि दर्शयति" इति। एवं चेन्मुक्त-जनतौल्य स्यादित्यत आह—निराघाटज्ञाने इति। निराघाट निरर्गलं ज्ञान यस्यास्तस्याः सबुद्धिः, अखण्डसुविदुल्लासस्वरूपे! सर्वस्मिन्नपि वैषम्यनैर्घृण्याभावेन समदृष्टियुक्ते इत्यर्थः। एवविधा देवी कुत्र वा निवसतीत्यत्राह—नियमपरचित्तैकनिलये इति। नियमपरानाह—"निःश्रेयो नियमं विना" इति न्यायात् जपपूजाध्यानादिनियमासक्ताः, तेषा चित्तान्येव एको मुख्यो निलयो निवासो यस्याः, तस्याः संबुद्धिः; हे नियमपरचित्तैकनिलये! "भक्तहृद्देहनिलया" इत्यष्टोत्तरशतनामोक्तिः। तर्हि निययपारतन्त्र्यं स्यादित्याह—नियत्या निर्मुक्त इति। नियमपारतन्त्र्यरहिते! किंतु भक्तानुग्रहाय तत्र प्रादुर्भूत इत्यर्थः। यद्वा—नियत्या नियमेन निर्मुक्ते, यथा कल्पवृक्षकामधेनुप्रभृतीना देवानामेवेष्टार्थप्रदान-नियमः। तद्वत् तव समस्तजनवत्सलाया इष्टार्थदाने नियमो नास्तीत्यर्थः। एवंविधा देवी कुत्र प्रतिपाद्यते, तत्सद्भावे च किं प्रमाणमित्याह—निखिलेत्यादि। निखिलैर्निगमान्तैः वेदान्तैः स्तुत पदं स्थान पदे अङ्घ्री वा तस्याः संबुद्धिः; समस्तवेदान्तप्रतिपाद्य इत्यर्थः। अत एव निरातङ्के! भयरहिते! "अभयं वै ब्रह्म" इति श्रुतेरिति भावः। हे नित्ये! ध्रुवे! समस्त-नित्यानामकदेवीस्वरूपे वा, हे देवि!। यद्वा—हे निधे! दयासमुद्रे, नित्यस्मेरे! निरन्त-रहासमुखतया भक्तयाञ्चादौर्मुख्यरहिते! निरवधिगुणे! अनन्तदयादाक्षिण्यादिगुणयुक्ते! नीतिनिपुणे! न्यायमार्गवर्तिजनानुरागवर्तिनि! निराघाटज्ञाने! विज्ञातभक्तजनचित्ते! विज्ञाय च नियमपरचित्तैकनिलये! यो नियमपरोभवत्यस्मादृशः तच्चित्ते नित्यवास्तव्ये! स्थित्वा च नियत्या निर्मुक्ते! अपरिमितेष्टार्थदायिनि! निखिलनिगमान्तस्तुतपदे! समस्तनिगमागमसप्रतिपाद्ये! नित्ये! देवि! मम; अत्यन्तं भवतीं भजतः आत्मन इमा भवतीमधिकृत्य कृता, स्तुतिमपि; स्तोत्रमपि, अतिविसदृशीमपीत्यर्थः। निगमीकुरु। भगवत्या निगमप्रतिपाद्यत्वात् भवत्प्रतिपादकेनानेन ग्रन्थेन निगमीभवितावश्यंभावात् अस्मिन्ननुगृह्येमा स्तुतिमपि भवत्प्रतिपादकनिगमतुल्या कुर्वित्यर्थः। यथा भवदनुग्रह-संप्रतिपन्नकवितावतारव्यासवाल्मीककृतपुराणकाव्यादिप्रबन्धाः यथा वेदवत्सर्वसंप्रतिपन्नाः कृताः, तथा भजतो ममापीमा स्तुति सर्वसंप्रतिपन्नां प्रमाणभूता च विधेहीत्यभिसंधिः। तथा चोक्त कूर्मपुराणे हिमवन्त प्रति भगवत्याः—

"वेदरूपा परा शक्तिर्मम लोके प्रवर्तते।
तया दृष्टानि कर्माणि कुर्वन्ति सुरसत्तमाः॥
सुरर्षयो राजर्षयो व्यासादिमुनयस्तथा।
तैः प्रणीतानि सर्वाणि कल्पसूत्रमुखानि च॥

धर्मशास्त्रपुराणानि सेतिहासस्मृतानि च ।
ज्ञेयानि वेदवत्तानि नात्र कार्या विचारणा ॥"

इति । निगमयेत्यत्र, "तत्करोति" इति णिच् । केचित्तु—'निगमय श्रवणपथं प्रापय अत्यादरेण सावधाना सती शृणु' इति व्याचक्षते ॥ ९९ ॥

**प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः**
**सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।**
**स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं**
**त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥१००॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ सौन्दर्यलहरी समाप्ता ॥

लक्ष्मीधरा

**प्रदीपेति ।** प्रदीपज्वालाभिः; प्रदीपस्य करदीपिकायाः ज्वालाभिः कीलाभिः, दिवसकरनीराजनविधिः; दिवसकरस्य सूर्यस्य नीराजनविधिः नीराजनकृत्यम्; सुधासूतेः; चन्द्रस्य, चन्द्रोपलजललवैः; चन्द्रोपलानां चन्द्रकान्तानां जललवैः निष्यन्दैः, अर्घ्यरचना, स्वकीयैः, आत्मसंबन्धिभिः, एतत्स्वकीयपदं प्रदीपज्वाला-भिरित्यादौ व्यत्ययेनान्वेति स्वकीयाभिरिति । अम्भोभिः, जलैः, सलिलनिधि-सौहित्यकरणं; समुद्रस्य तृप्तिहेतुः तर्पणविशेषः । त्वदीयाभिः; त्वदुत्पन्नैः त्वदीयाभिः, वाग्भिः; त्वत्स्वरूपैः वाक्यसंदर्भैः, स्तुतिः स्तोत्रं, तव; भवत्याः, जननि! मातः! सवित्रीत्यर्थः, वाचां वाक्प्रपञ्चस्य स्तुतिरियम् ।

अत्रेत्थं पदयोजना—हे वाचां जननि! यथा स्वकीयाभिः प्रदीपज्वालाभिः दिवसकरनीराजनविधिः, यथा स्वकीयैः चन्द्रोपलजललवैः सुधासूतेः अर्घ्यरचना भवति, यथा स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं भवति, तथा त्वदीयाभिः वाग्भिरेव तवेयं स्तुतिः ।

अत्र इयं स्तुतिरिति यदा पूर्वोक्तप्रदीपज्वालादिवाक्यप्रतिपादितार्थसाम्य-परामर्शः, तदा प्रतिवस्तूपमालंकारः, उपमानोपमेययोर्वस्तुप्रतिवस्तुभावेनान्वयात् । यदा इयं स्तुतिरिति स्वरूपमात्रं परामृश्यते, तदा भिन्नवाक्यत्वेन बिम्बप्रतिबिम्बा-

क्षेपात् दृष्टान्तालंकारः । एवं प्रतिवस्तूपमादृष्टान्तालंकारयोः अन्वयभेदेन प्रतीयमानत्वात् वाक्यद्वयश्रवणात् संसृष्टिरेवेति ध्येयम् ।

अस्मिन् सौन्दर्यलहरीश्लोकशतके 'समानीतः पद्भ्याम्' इति, 'समुद्भूतस्थूलस्तनभरम्' इति; 'निधे नित्यस्मेरे' इति श्लोकत्रयं वर्तते । तत्तु भगवत्पादरचितं न भवति, केनचित्प्रक्षिप्तमिति न व्याख्यातम् । श्लोकशतकमेव व्याख्यातम् ॥ ६० ॥

इति श्रीलोल्लकुलसंप्रदायप्रवर्तकभ्रमराम्बिकावरप्रसादसमुल्लसितमहासारस्वतभट्टलोल्लपतिग्रन्थविवरणकर्तृश्रीमहोपाध्यायमहादेवाचार्यसप्तमेन साहित्यपारिजातस्मृतिकल्पतरुप्रबन्धप्रबन्धृलक्ष्मीधरार्यषष्ठेन भरतार्णवपोताख्यसाहित्यमीमांसाग्रन्थद्वयप्रणेतृविरिञ्चिमिश्रपञ्चमेन मीमांसाद्वयजीवातुनिर्मातृपुरुषोत्तममहोपाध्यायनप्त्रा प्राभाकरामृतवाहिनीप्रभावलीखण्डनाद्यनेकप्रबन्धसंदर्भप्रवर्तकबिरुपदमहोपाध्यायलक्ष्मणार्यपौत्रेण नयविवेकदीपिकाप्रबन्धसंविधातृमहोपाध्यायविद्वत्सार्वभौमनूतनव्यासाद्यनेकबिरुदाङ्कितश्रीविश्वनाथभट्टारकतनयेन अधीतदशशतनयेन पार्वतीगर्भशुक्तिमुक्तारत्नेन बहूकृतधीचिरत्नेन लोल्लकुलकलशाम्बुधिसुधांशुना यशःप्रांशुना हरितगोत्रकल्पशाखिना आपस्तम्बशाखिना षड्दर्शनीपारदृश्वना प्रतिपक्षवृक्षजञ्झामातरिश्वना भ्रमराम्बिकाप्रसादसमासादितप्रतिभाविशेषेण भुवि शेषेण निखिलयामलतन्त्रार्णवावगाहनरुद्रेण आश्रयीकृतगजपतिवीररुद्रेण नीलगिरिसुन्दरचरणारविन्दचञ्चरीकेण सरस्वतीविलासाद्यनेकस्मृतिनिबन्धनलक्ष्मीधराद्यनेकसाहित्यनिबन्धननयविवेकभूषणाद्यनेकगुरुमतनिबन्धयोगदीपिकाद्यनेकपातञ्जलमतनिबन्धनमहानिबन्धनाख्यमानवधर्मशास्त्रटीकाकर्णावतंसबर्हावतंसाद्यनेककाव्यकल्पकेन आश्रितजनकल्पकेन निग्रहानुग्रहकौशिकेन श्रीमहोपाध्यायलक्ष्मीधरदेशिकेन कृतेयं लक्ष्मीधराख्या सौन्दर्यलहरीस्तुतिव्याख्या संपूर्णा; अनया संतुष्टा भवतु भगवती भवानी ॥

अस्मदीयानां लक्ष्मीधराचार्याणां पद्यम्--

वयमिह पदविद्यां तन्त्रमान्वीक्षिकीं वा
यदि पथि विपथे वा वर्तयामः सपन्थाः ।
उदयति दिशि यस्यां भानुमान् सैव पूर्वा
न हि तरणिरुदीते दिक्पराधीनवृत्तिः ॥
सायं संफुल्लमल्लीसमसुरभिसुधामाधुरीसाधुरीति-
प्रेङ्खत्पुंखानुपुंखस्फुरदमरसरिद्वीचिवाचालवाचः ।
लोल्लश्रीलक्ष्मणाख्यो गुणमणिजलधिर्भास्वते भूसुराली-
केलीनालीकपालीदशशतकिरणो विद्वदग्रेसरोऽसौ ॥

यस्य सप्तमः—

यः कर्णाटवसुंधराधिपमहास्थाने सुवर्णायिते
यो विद्वन्निकषायितो नृपगृहे वेमाख्यपृथ्वीशितुः ।
श्रीमल्लोल्लटभट्टशिष्य इति यो लोल्लाख्यया श्रूयते
श्रीशेषान्वयशेखरः स हि महादेवो विपश्चिन्महान् ॥

तस्योक्तिः—

निकाषायितुमीहे वा सुवर्णायितुमेव वा ।
सुवर्णायितुमेवेहे निकषो न ह्यलंक्रिया ॥
तर्कन्यक्कृतवावदूकनिचयं वादित्वमास्ता मम
व्याख्यातृत्वमुदारशिष्यनिवहश्लाघ्यं तथा तिष्ठतु ।
स्वर्लोकच्यवमानसिद्धतटिनीकल्लोलसंलापिना-
मुल्लासा वचसां न कस्य मनसां मत्काश्चमत्कारिणः ॥
गतोऽयं शंकराचार्यो वीरमाहेश्वरो गतः ।
षट्चक्रभेदने को वा जानीते मत्परिश्रयम् ॥

**समाप्तोऽयं ग्रन्थः**

---

## अरुणामोदिनी

स्तुतिरपीयं च भवदीयैव, नाहमत्र कर्तेत्याह—प्रदीपेति । वाचा गिरां जननी माता तस्याः संबुद्धिः; हे वाचा जननि! वाग्देवीरूपधारिणि! मातृकारूपे देवि! इमाः त्वादीयाः ताभिः, "प्रत्ययोत्तरपदयोश्च" इति छः त्वादेशः; गीर्भिः रचितेति शेषः। भवत्या मातृकारूपत्वादिति भावः। इयम्; आनन्दलहरी, सौन्दर्यलहरीसमाख्या, स्तुतिः; विद्यमानगुणवर्णनरूपा नुतिः, तव; भवत्याः; प्रदीपज्वालाभिः; दीपप्रभाभिः, दिवसकर-नीराजनविधिः; दिवसकरस्य सहस्रार्चिषः सर्वतेजोमयस्य सूर्यस्य, नीराजनविधिः अग्नि-ज्वालया आरात्रिकविधानं, तादृगित्यर्थः। तथा सुधासूतेः; अमृतमयस्य, इन्दोः, "आरा-त्रेयोमा सुधासूतेः" (?) इत्यमरः। चन्द्रोपलजललवैः; तदीयैरेव चन्द्रकान्तमणिनीर-बिन्दुभिः अर्घ्यस्य रचनाविधानम्, तथा स्वकीयैः; स्वीयैः, सामुद्रैरेव; अम्भोभिः, जलैः सलिलनिधेः समुद्रस्य, सौहित्यस्य करण विधानं तर्पणाञ्जलिः; तत्सदृशीत्यर्थः। "सौहित्यं तर्पणं तृप्तिः" इत्यमरः। "अकारादिक्षकारान्तमातृकावर्णरूपिणी" इत्यष्टोत्तरशत-नामोक्तेः मातृकाक्षराणा भवद्रूपत्वेन तद्विकृतिरूपस्य सर्ववाग्व्यवहारस्यापि भवद्रूपत्वात् भवतीमधिकृत्य कृता आगमार्थसंवादिनीयं स्तुतिः भवत्संबन्धिमातृकाक्षरात् अनयत्वात् भवदीयवाग्भिरेव भगवत्याः स्तुतिरियम्। समस्ततेजोनिधेः सकललोकप्रकाशत्वाच्चा-भिन्नस्य कथं दीपज्वालया आरात्रिकविधानम्, यथा वा समस्तजलपूर्णस्य सलिलनिधेः तज्जलैरेवार्घ्यविधान, तथैवेति भावः। अतः स्तोत्रस्तुत्यस्तावकभावेन भवत्या एवावस्थि-तत्वात् अल्पस्य स्तोतुर्मम वाचस्य सर्वे अपराधाः क्षम्यन्तामिति सर्वमनवद्यम् ॥ ६० ॥

सत्साहित्यप्रवीणास्त्रिभुवनमहितो कुण्डुमुक्त्यन्ववाये
वीरो गङ्गाधराख्यः समुदवहदसौ मल्लिनाथात्कवेर्यः।
तस्य श्रीसूनुकामेश्वरकविरचिताचार्यदेवीस्तुतीय-
व्याख्यानेऽस्मिन् द्वितीया समजनि लहरिश्चारुणामोदिनीयम् ॥
श्रीविघ्नेश्वरभक्तवत्सलकृपासवीक्षणप्रेरणा-
द्ग्रन्थोपक्रमणप्रवृत्तमखिलाभीष्टार्थदानक्षमात्।
दृष्ट्या दूरनिरस्तमत्सरमदासूयादिसंदोहया
सान्द्रानन्दसुधारसस्तुतिजुषा पश्यन्तु मा सूरयः ॥
श्रीश्रीधरयादिमिथुनैः संसेवितपदाम्बुजम्।
तरुणारुणनीकाशं भजता गणनायकम् ॥
कामेश्वरेण विदुषा निर्मितातिमनोहरा।

अरुणामोदिनी नाम्नी व्याख्येयमतिशोभना ॥
आमोदितारुणादेव्या राजराजेश्वराह्वया ।
आतन्वती बुधामोदं जीयादाचन्द्रतारकम् ॥
अरुणामोदिनीनाम्न्या व्याख्यया शुभयानया ।
संतुष्टाभीष्टदा भूयादरुणा करुणावती ॥
मयि प्रसाद विबुधाः पश्यतारुणया कृतम् ।
येनातिकठिनग्रन्थव्याख्यानोत्सुकतामगाम् ॥

इति श्रीमदखिलविद्यासंप्रदायप्रवर्तकसाहित्यपदसार्वभौमश्रीमत्कोडमर्तिवंशरत्नाकरसुधाकरब्रह्मान्तर्वाणिवर्यतनूभवस्य विश्वजनीनविद्यावैशद्यस्य विद्वन्मणेर्मल्लेश्वरपण्डितस्य सूनोर्गङ्गाधरधीरधुरंधरस्य तनूभवेन समस्तभजन्मनोरथसंधानसमवहितश्रीविघ्नेश्वरकरुणाकटाक्षनिरीक्षणलब्धविद्यावैशद्येनाक्कमाम्बागर्भरत्नाकरराकासुधानिधिना वेंकटेश्वरभागिनेयेन कामेश्वरसूरिणा विरचितासु कृतिष्वाचार्यभगवत्पादकृतदेवीस्तुतिव्याख्यायामरुणामोदिनीसमाख्यायां सौन्दर्यवर्णनापरः सौन्दर्यलहर्याख्यो द्वितीयः कल्लोलः ॥

**समाप्तोऽयं ग्रन्थः**

APPENDIX 1

## *Index of Half Verses*

# सौन्दर्यलहरीश्लोकानामर्धानुक्रमणिका

---

APPENDIX 2

*Index of Authors*

## लक्ष्मीधरायाम्, अरुणामोदिन्यां च स्मृता ग्रन्थकर्तारः

APPENDIX 3

*Index of Works*

# लक्ष्मीधरायां, अरुणामोदिन्यां च स्मृता ग्रन्थाः

## APPENDIX 4

*Index of Citations*

# उदाहृतप्रमाणवाक्यानामनुक्रमः

### अ

आ



* आकाशवत्सर्वगश्च सूक्ष्मः, स नैत्रनिषित, ४.

ग



घ

द

ध



न

भ



म

य

*Abbreviations used in the Appendix IV*

# संज्ञाविवृतिः

| | |
|---|---|
| अ० नि० | अकारादिनिघण्टु. |
| अनु० | अनुशासनम् |
| अन्न० स्तो० | अन्नपूर्णास्तोत्रम् |
| अभि० | अभियुक्तोक्तिः |
| अभि० गु० | अभिनवगुप्तपादाः |
| अभिधा० | अभिधानम् |
| अ० कु० | अशेषकुलवल्लरी |
| अ० शे० | अमरशेषः |
| अम० | अमर |
| अम्बा० or अ० स्त० | अम्बास्तव· |
| अरु० | अरुणोपनिषत् |
| अलं० सू० | अलंकारसूत्रम् |
| अष्ट० | अष्टोत्तरशतनाम |
| आ० सू० | आयुष्यसूक्तम् |
| आग० | आगमः |
| आलं० | आलंकारिकाः |
| ई० उ० | ईशावास्योपनिषत् |
| उणा० | उणादिः |
| एका० | एकावलिः |
| एकाग्नि० | एकाग्निकाण्डः |
| ऋक्० | ऋग्वेदः |
| कठ० | कठोपनिषत् |
| कर्ण० स्तु० | कर्णावतंसस्तुतिः |
| कल्याण० | कल्याणवृष्टिस्तवः |
| का० वि० | कामकलाविलासः |
| काम० स्तो० | कामसिद्धिस्तोत्रम् |
| कामि० | कामिकम् |
| काव्य० ल० | काव्यकल्पलता |
| काव्य० प्र० | काव्यप्रकाशः |
| काव्य० सू० | काव्यालंकारसूत्रम् |
| का० द० | काव्यादर्श |
| किरा० | किरातार्जुनीयम् |
| किरा० व्या० | किरातार्जुनीयव्याख्या |
| कुमार० | कुमारसंभवम् |
| कुव० | कुवलयानन्द |
| कौर्म० | कूर्मपुराणम् |
| चतु० | चतुःशती |
| चन्द्र० | चन्द्रज्ञानविद्या |
| चम्पू० | चम्पूरामायणम् |
| चर्चा० | चर्चास्तव. |
| छन्दः० | छन्दःशासनम् |
| छा० उ० | छान्दोग्योपनिषत् |
| जै० सू० | जैमिनिसूत्रम् |
| ज्योति० | ज्योतिःशास्त्रम् |
| तै० आ० | तैत्तिरीयारण्यकम् |
| तै० उ० | तैत्तिरीयोपनिषत् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| तै० स० | तैत्तिरीयसंहिता |

| | |
|---|---|
| त्रि० उ० | त्रिपुरोपनिषत् |
| त्रि० शे० | त्रिकाण्डशेष |
| त्रिपुर० स्तो० | त्रिपुरसुन्दरीस्तोत्रम् |
| द० स० | दक्षिणामूर्तिसंहिता |
| दश० | दशरूपकम् |
| दे० मा० | देवीमाहात्म्यम् |
| दोह० | दोहदकौतुकम् |
| द्वि० को० | द्विरूपकोश· |
| धर० | धरणिः |
| धा० | धातुपाठ. |
| ध्वन्य० | ध्वन्यालोकः |
| नव० | नवरत्नमालिका |
| नाट्य० | नाट्यशास्त्रम् |
| नाना० or ना० र० | नानार्थरत्नमाला |
| निरु० | निरुक्तिः |
| नीति० | नीतिवाक्यामृतम् |
| नैष० | नैषधम् |
| न्या० | न्यायः |
| पद० | पदमञ्जरी |
| पा० ग० | पाणिनीयगणपाठः |
| पा० प० | पाणिनीयपरिभाषा |
| पा० वा० | पाणिनीयवार्तिकम् |
| पा० सू० | पाणिनीयसूत्रम् |
| पुरा० | पुराणम् |
| पौरा० | पौराणिका. |
| प्र० | प्रयोगः |
| प्रता० | प्रतापरुद्रीयम् |
| प्रता० व्या० | प्रतापरुद्रीयव्याख्या |
| प्राचीन० | प्राचीनयोजना |
| बा० सू० | बादरायणसूत्रम् |
| बृ० उ० | बृहदारण्यकोपनिषत् |
| बृ० ना० | बृहन्नारदीयम् |
| भाग० | भागवतम् |
| भार० | महाभारतम् |
| भाव० | भावप्रकाशनम् |
| भू० स० | भूवादिसूत्रम् |
| भैर० | भैरवयामलम् |
| म० | मन्त्रचिन्तामणिः |
| म० भा० | महाभाष्यम् |
| मन्त्र० | मन्त्रशास्त्रम् |
| महा० | महाभाष्यम् |
| मातृ० | मातृकाकोश. |
| मा० हृ० | मातृकाहृदयम् |
| मानस० | मानसोल्लास· |
| माल० | मालतीमाधवम् |
| मी० वा० | मीमांसावार्तिकम् |
| मी० सू० | मीमांसासूत्रम् |
| मु० उ० | मुण्डकोपनिषत् |
| मेदि० | मेदिनीकोशः |
| यो० दी० | योगदीपिका |
| यो० सू० | योगसूत्रम् |
| रघु० | रघुवंशम् |
| रति० | रतिरहस्यम् |
| रत्न० | रत्नमाला |
| राम० | रामायणम् |
| रा० व्या० | रामायणव्याख्या |
| रु० र० | रुद्ररहस्यम् |
| रुद्र० | रुद्रयामलम् |
| लक्ष० | लक्षणम् |
| ल० त० | लक्ष्मीतन्त्रम् |
| ल० दी० | लक्षणदीपिका |
| ल० त्रि० | ललितात्रिशती |
| लघु० | लघुस्तवः |
| लोक० | लोकन्यायः |
| वच० | वचनम् |
| व० स० | वसिष्ठसंहिता |
| वा० स० | वायुसंहिता |
| वाक्य० | वाक्यपदीयम् |

| | | | |
|---|---|---|---|
| वाम० त० | वामकेश्वरतन्त्रम् | सक० स्त० | सकलजननीस्तवः |
| वि० पु० | विष्णुपुराणम् | सन० स० | सनत्कुमारसंहिता |
| वे० भा० | वेदभाष्यकारः | सह० | सहस्रनाम |
| श० ब्रा० | शतपथब्राह्मणम् | साख्य० का० | साख्यकारिका |
| शब्द० | शब्दार्णव. | सामु० | सामुद्रिकम् |
| शास्त्र० | शास्त्रदीपिका | सि० कौ० | सिद्धान्तकौमुदी |
| शिव० | शिवगीता | सिद्ध० | सिद्धघुटिका |
| शिशु० | शिशुपालवधम् | सुभ० | सुभगोदयः |
| शुक० | शुकसंहिता | सु० व्या० | सुभगोदयव्याख्या |
| शृ० ति० | शृङ्गारतिलकम् | सूत० | सूतसंहिता |
| शैव० | शैवपुराणम् | सोम० | सोमोत्पत्तिः |
| श्रुति० | श्रुतिसूक्तिमाला | स्मर० | स्मरणम् |
| श्वेत० | श्वेताश्वतरोपनिषत् | स्व० सं० | स्वच्छन्दसंग्रह |
| सं० शा० | संगीतशास्त्रम् | हारी० | हरीत. |

# शोधनम्

| Page | Line | |
|---|---|---|
| १ | १३ | ०मभिधाम् |
| २ | १६ | कलासकलित. इति मातृकापाठ. |
| ,, | २१ | नखलू, निषेधसभावनयो. इति मातृकापाठ. |
| ९ | २ | शभो· |
| ११ | १६ | मानवान् |
| १२ | ७ | चेतनासि |
| १३ | २ | ०स्तथा |
| १३ | १७ | शक्त्या |
| १४ | १५ | जनाह्लादन० |
| १८ | १९ | स्थितस्याप्यवि० |
| २० | २१ | रसभाञ्जि |
| २२ | २२ | दुष्परि० |
| २४ | १९ | "शि. शङ्खौ" इति मुद्रित-नानार्थरत्नमालाकोशे |
| २६ | १ | वाति० |
| २२ | १७ | व्यक्तः, असंदिग्धे |
| ,, | १८ | यथा |
| ,, | २८ | ०भिन्नस्तया इत्यरुणामोदिनी |
| २४ | २३ | हत्वा |
| ५२ | १९ | दुर्गतानाम् |
| ५३ | २२ | चैतन्यम्" इति |
| ६६ | १६ | पाशाङ्कुशौ शराश्चापम् इत्य-रुणामोदिनी |
| ७६ | २४ | इति श्रुतिरपि |
| ८७ | ८७ | शुभ्रावस्त्र: |
| ८९ | २४ | भावेषु |
| ९९ | १२ | प्रवर्तिका: |
| १०९ | ११ | वशिन्या० |
| ११६ | ९ | करोति" |
| १४३ | १० | तन्त्रोत्तरमिति मुद्रितवामकेश्वर-तन्त्रे |
| १४९ | १७ | षोडशी |
| १५५ | ५ | लक्ष्मीधरे |
| १६७ | २ | हरीन्द्र० |
| १७२ | १८ | चापाग्र० |
| १७९ | ४ | ०नाग्निना |
| ,, | १६ | अर्पां |
| १८१ | ३ | तट्टितान्, तम्, "झय: इति वक्तम्" इति पाठो युक्त |
| १८५ | १ | किंचित् |
| १८९ | १३ | तनयेन |
| १९० | १५ | भजता |
| ,, | १६ | मनोहरा |
| १९६ | १० | धुनोतु ध्वान्त |
| १९७ | १६ | ना धीरदेवयो: |
| २०८ | १३ | नयनयो: |
| २१४ | ९ | सपूर्णास्ति० |
| २२८ | ८ | कृदिकारा० |
| २६५ | ११ | बिभर्ति" इत्यादि |
| २७६ | ८ | आविर्भवत्पुलकसहतिभि: शरीरै: इति मुद्रितकोशपाठ: |
| २७७ | २२ | कथ वा हस्ताभ्याम् इत्यरुणा-मोदिनीपाठ: |
| २९४ | ११ | प्रथमां |
| ३०७ | १५ | तदस्यास्त्यस्मिन् |
| ३१७ | २० | गतास्ते . . . . २९० |
| ३३५ | १४ | गीता, १८-४२ |
| ,, | २५ | तच्चक्रवर्तिपदवी०, २७६ |